MĪMĀṀSĀ AND DHARMA SĀSTRA SERIES, No. I

Published under the authority of
the Mīmāṁsā Grantha Prakas'aka
Samiti of Poona.




GENERAL EDITOR
PANDIT RĀMACHANDRA S'ĀSTRĪ KINJAVADEKAR, DĪKṢIT.




# KRṢṆA-YAJURVEDA

(NEW EDITION)

**Part I**

(Containing Ādhāna and Punarādhāna Sections)

# कृष्णयजुर्वेदप्रकरणकौमुदी

प्रथमो भागः

आधान-पुनराधाने ।

# KṚṢṆA-YAJURVEDA.

(NEW EDITION)

**Part I**

(Containing Ādhāna and Punarādhāna Sections)

EDITED
BY

PANDIT VĀMANS'ĀSTRĪ KINJAVADEKAR
MĪMĀṀSAKA S'IROMANI, SARASVATĪ BHŪS'ANA

AND

BRAHMAS'RĪ RĀMADĪKṢIT, HANGAL.

English Translation and Critical Notes
BY

S. M. KATRE, M.A., Ph. D., (LONDON)

1938
MĪMĀṀSĀ GRANTHA PRAKĀS'AKA SAMITI,
POONA. (INDIA)

# कृष्णयजुर्वेदप्रकरणकौमुदी




## प्रथमो भागः

## आधान–पुनराधाने ।

अयं ग्रन्थः

*मीमांसकशिरोमणिसरस्वतीभूषणेत्यादिबिरुदालङ्कृतैः, मीमांसाविद्यालयः, मीमांसाग्रन्थप्रकाशकसमितिः, इत्याद्यनेकसंस्थाप्रतिष्ठापकैः, 'संस्कारमीमांसा' 'आधानपद्धतिः' 'अग्निहोत्रचंद्रिका' इत्याद्यनेकग्रन्थप्रणेतृभिः, सोमासोर्यामातिरात्रादिबहुयागप्रवर्तकैर्महामान्यैः*

**पण्डित वामनशास्त्री किंजवडेकर**

इत्येतैः तथा

**प्रयोगशास्त्रनदीष्णैः रामदीक्षित हानगल इत्येतैश्च**

संपादितः

---

सोऽयम्

एस्. एम्. कत्रे, एम्. ए., पी. एच्. डी., (लंडन)

इत्यभिधेयमहाभागैराङ्ग्लभाषायामनूदितटिप्पण्यादिना परिष्कृतश्च

१८६०

मीमांसाग्रंथप्रकाशकसमितिः, पुण्यपत्तनम् ।



धीमंत वैदिकानुष्ठान गृहीतदीक्ष
यशवन्त विष्णु नेने. मुंबई.

# CONTENTS



## PLATES

# निवेदनम् ।



उच्चैर्गतिर्जगति सिध्यति धर्मतश्चेत् तस्य प्रमा च वचनैः कृतकेतरैश्चेत् ।
तेषां प्रकाशनदशा च महीसुरैश्चेत्तानन्तरेण निपतेत् क नु मत्प्रणामः ? ॥

—श्रीभोजराजः

अयि प्रेक्षावत्प्रमुखाः ! सनातनवैदिकधर्मजीवातुभूताः ! विदितमेव तत्रभवतां यत्— सर्वान् द्विजानुद्दिश्य भगवती श्रुतिराज्ञापयामास 'स्वाध्यायोऽध्येतव्यः' इति । वेदबोधितेष्टसाधनताकत्वस्यैव धर्मलक्षणत्वात् अर्थज्ञानोपहितं वेदाध्ययनमेव समीहितार्थाय भवति, नान्यथेति "ब्राह्मणेन निष्कारणं षडङ्गो वेदोऽध्येयो ज्ञेयश्च" "योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा" इत्यादिभिर्वचनैः "अथातो धर्मजिज्ञासा" इत्येतदधिकरणोक्तजैमिनीयन्यायदिशा चैतदेव निष्पन्नं सिध्यति ।

अनयैव सरण्या गच्छन्तः सर्वेऽपि प्राचीनाः सनातनधर्मनिष्ठाः वैदिका नित्यनैमित्तिकानि कर्माणि समाचरन् । परं प्रबलेन कालहतकेन विपर्यस्तायां लोकव्यवस्थायां, वेदार्थज्ञाननिदानभूतायां च याज्ञिकसरणौ प्रायः इतिहासमात्रविश्रांतायां, वेदार्थज्ञाने क्लिश्नन्तोऽपि नैव संपूर्णतस्तत्तत्त्वमवगच्छन्ति । तामेतां दुरवस्थां निध्यायमानैर्मीमांसाग्रंथप्रकाशकसमितिप्रचालकैः धर्मजिज्ञासोपयोगिने वेदार्थप्रचाराय स्वशक्त्या कियानपि प्रयत्नः कृष्णयजुर्वेदप्रकरणकौमुदीप्रकाशनरूपेण समनुष्ठीयते ।

सोऽयं यजुषां वेदो नानाशाखाविभक्तो यज्ञकाण्डीयाध्वर्यवादिसमर्पकः कृतपरिश्रमैरपि दुरवबोध एव भवति । अतोऽत्र सकलेऽपि कृष्णयजुर्वेदे इतस्ततो विप्रकीर्णानां तत्तद्यज्ञियप्रकरणोपयुक्तानामंशानामुपसंहारपूर्वकमाधानप्रभृतिषु प्रकरणेषु यथायथं विभज्य संग्रहः क्रियते ।

एतेन कृष्णयजुर्वेदप्रकरणकौमुद्याख्येन कृष्णयजुर्वेदप्रबन्धेन वैदिकाः, याज्ञिकाः, तत्तत्कर्मानुष्ठानपटवः, श्रद्धालवः, कर्मनिष्ठा अन्ये च विविधफलोद्देशेन कृष्णयजुर्वेदमभ्यस्यन्तः सर्वे एव यत्सत्यं परमं प्रमोदमुपयास्यन्तीति मन्यामहे । आधानादिब्रह्मविधान्तैरेकोनत्रिंशैः प्रकरणैः समुपेतोऽयं समग्रोऽपि कृष्णयजुर्वेदो विविधाङ्गोपाङ्गसमन्वितः क्रमेण महाजनाधारेण प्रकाशं यायात् । संप्रति चाधानपुनराधानात्मकः प्रथमो भागोऽयं भूमिकाभाष्यांग्लानुवादटिप्पण्यादिभिर्महामूल्यैरलङ्कारैरलङ्कृत्य विदुषां पुरतः स्थाप्यते ।

आधानविषयकाणामवशिष्टानामंशानामेतद्ग्रंथप्रणेत्रैवाधानपद्धत्यामग्निहोत्रचंद्रिकायां चाधानपद्धतिशेषतया सुविशदं निरूपितत्वान्नात्र ते पुनः संगृहीताः ।

एतद्ग्रंथप्रकाशनकार्ये साहाय्यमनुतिष्ठतामधस्तनानां पुण्यशीलानां नामस्मरणेनात्मानं पावयामः । ग्रंथकर्तृणामीदृशेऽतिकठिने कर्मणि निर्निद्रं साहाय्यं कुर्वतां ब्रह्मश्रीश्रौतविद्यानदीष्णरामदीक्षित हानगल इत्येतेषां नाम प्राथमिकीं श्रेणिमधिरोहति । संप्रति भारते वर्षे इमानेव

दीक्षितचरणान् समाश्रित्य भगवती श्रौती विद्या तिष्ठतीति नायं मौढिवादः । भूमिकानिर्मातारः पंडितप्रकाण्डाः कर्नाटकावनिविभूषणायमानाः श्रीमन्तो नागेशशास्त्रीउप्पिनवेङ्कगिरिमहाभागाः सानन्दं निर्देश्याः । इमं ग्रंथमांग्लभाषानुवादेन टिप्पण्याद्यैश्च विभूषयन्तः डॉ. एस्. एम्. कत्रे महाभागाः, तथा च सनातनवैदिकधर्मानुष्ठातारः श्रीमन्तत्र्यंबकराय नेने महाभागाश्च नितान्तं धन्यवादार्हाः । इतरे चात्रानेके साहायका वर्तन्ते, येषा महीयसा हस्तावलम्बेन सनातनवैदिकधर्मोत्कर्षकारकमिदं कार्यमहर्निशं प्रचलति । उपर्युल्लिखितानेवान् सर्वान् प्रणम्य चिरकालिकं हस्तावलम्बं चाशास्य प्रस्तुते कर्मणि व्यापारयामि स्वात्मानमित्यावेदयति—

चैत्र शुक्ल १-१८६० }
पुण्यपत्तनम् }

सुधीजनविधेयः
**किंजवडेकरोपाह्वो रामचन्द्रशास्त्री**
मीमांसाग्रन्थप्रकाशकसमितेः प्रधानसंपादकः

# EDITORIAL NOTE.

*If the highest state is possible through Dharma and its measurement by words of artificial construction which can only be enlightened by the gods on earth, where also can my obeisance go?* —Srī Bhojarāja.

Dear Readers! To you who are the life blood of the Sanātana Vaidika Dharma it is well known that the divine Sruti ordained in so far as the twice born are concerned, the study of the Vedas. But this study of the Vedas becomes fruitful in the proper sense only if it is accompanied by a true understanding of the inner significance, for the character of Dharma, can only be towards the realisation of the good implied in the Vedas. This cannot be otherwise, as pointed out by such teachings as: 'A brahmana should study and understand without any motive the Veda with its six branches', 'He who, forsooth, understands the meaning, enjoys auspicious, reaches to heaven, being purified by knowledge'. This is verily established by such sentences leading up to the study of Dharma according to the Science propounded by Jaimini.

Following in this direction our ancestors, who were devoted to Sanatana Dharma, practised the *NITYA* and *NAIMITTIKA* sacrifices. But with a change in time which destroyed the Society favourable to the practice of Vedic injunctions, people who study with great difficulty the Vedas and their significance, do not completely attain their object, because of the loss of the true practical sacrificial tradition. It is in order to remedy this state of affairs to some extent that the Mimamsa Grantha Prakashaka Samiti has undertaken to publish according to its means a few books explaining and propagating the Vedic doctrines.

The Yajurveda divided into different *Sakhas* and the basic text for all sacrificial activities, is indeed difficult to be understood even by persons who exert a great deal towards this object. It is therefore divided here into proper sections according to the different sacrifices described and rearranged. It is hoped that this rearranged text entitled Krsna Yajurveda Prakarana Kaumudi will be very useful to all sacrifices and followers of the Karmamimamsa and others who wish to study the Krsna Yajurveda. This work is divided into twenty nine sections beginning with Ādhana and ending with Brahmavidya, with all major and subsidiary branches. May it gradually see the light of the day with the encouragement of the enlightened readers. We are now presenting here the first part consisting of Ādhana and Punaradhana with Introduction, English Translation and notes and costly illustrations. Since the Ādhana has been properly described by the Editor of this volume in his ĀDHĀNAPADHATI we shall not repeat his observations here.

In publishing this work we have received unstinted and spontaneous help and encouragement from Pandit Ramadiksita Hangal, the very embodiment of Vedic learning and one considered the greatest Vedic scholars. Dr. S. M. Katre has translated it in English and that great Karnatak Scholar Pandit Nages' Sastri Uppinbettigiri has written the Sanskrit Introduction. To these gentlemen our sincere thanks are due. Our thanks are also due to Mr. Trimbakrao Nene. To others also who have helped us in many ways we are greatly obliged for keeping in this way the light of Sanatana Dharma unsullied. To all these gentlemen and scholars we offer our sincere felicitations.

*Poona, 1-4-1938.* R. D. K.

# PREFACE.

The present translation of the Ādhana and Punarādhāna sections of the rearranged Taittirīya Veda (=Samhita, Brahmana, Āranyaka and Upaniṣad portions) is due to the request of Pandit Vamanas'astri Kinjavadekar, the enterprising General Secretary of the M. G P. Samiti. Originally it was intended to add copious notes to explain the traditional point of view along with modern interpretations suggested by the Western methods of research. But owing to the Sanskrit Commentary of Sayana explaining the traditional point of view, only a philological translation has been attempted here Difficulties of a linguistic nature are alone dealt with in general in the footnotes. The Glossarial Index is designed to explain difficult words of a technical nature. It is proposed to add a volume of explanatory notes taking into account the versions of other recensions of the Yajurveda when the entire translation of the 29 rearranged chapters is published, so as to avoid unnecessary duplication. The success of the plan must necessarily depend upon the amount of encouragement received from Oriental Scholars It is the hope of the M. G. P. Samiti that this English Translation will materially help to promulgate the Mimamsa Science among all Oriental Scholars in the world.

It now remains for me to express my obligations to the many friends who have helped me in this difficult task. Pandit Vamanas'astri has patiently borne with the many unavoidable delays in the preparation of this work, and his courtesy throughout has been a source of inspiration to me His nephew Rāmacandras'astri Kinjavadekar has often discussed with me the different aspects of this work, and as Editor materially helped me with the proof correction To my friend Mr. P. K Gode, M A, I am deeply indebted for his having gone through the entire press copy as well as the final proofs of the work. He was, moreover, responsible in persuading me to undertake this work for the M G P Samiti. To my brother Mr. R. M. Katre, I am indebted for having typed out the entire MS. for the press Finally the M G. P. Samiti Office have collaborated with the Nirnaya Sagar Press in rendering me every assistance for carrying out the complicated printing To all these friends I offer my sincere thanks

I shall consider my labour amply rewarded if the M. G. P. Samiti successfully carries out its programme of publications, which is only possible if the scholarly world gives sufficient encouragement.

Deccan Gymkhana,
Poona 4

S. M KATRE.

# शुद्धिपत्रम् ।



| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| | | **भूमिका ।** | |
| २ | १४ | पित्रणांपा | पितृऋणापा० |
| ,, | २३ | कार्यधूर्मर्दीय | कार्यधुरामर्दीय |
| ३ | ५ | राण्धुरं | राद्धुरां |
| ५ | २२ | (२-४-१०) | (बृह० २-४-१०) |
| ,, | २४ | उच्चारणाविषय | उच्चारणविषय |
| ७ | १५ | नोपलिप्सेयुः | नोपलिप्सेरन् |
| ,, | २७ | विशेषभाञो | विशेषभाजो |
| ९ | १७ | २. का | २. पा. |
| ,, | २१ | ३२ | ३३ |
| ,, | २२ | विभागो ऋचां | विभाग ऋचां |
| १० | ९ | ज्योतिषाणीति | ज्यौतिषाणीति |
| ,, | १३ | ज्योतिषं | ज्यौतिषं |
| ,, | २३ | भारद्वाज | भरद्वाज |
| ,, | २४ | मानव | मनु |
| ,, | ,, | काठक | कठ |
| ,, | २५ | वेदधर्मोऽनैमेति | वेदधर्मोऽनयेति |
| ,, | २९ | क्षिप्तासे | क्षिप्तास इति |
| | | | वक्षिप्ताद्यो |
| ११ | ११ | सनक्षेप्सासा० | सन्नन्तस्येच्छा- |
| | | ध्यविचारे | साध्यविचारे |
| ,, | १८ | राराजते | राराज्यते |
| १४ | ११ | पला | पाला |
| ,, | १७ | यपङ्क्तिः | यपङ्क्ति० |
| ,, | २५ | नैयायिक | नैयायिक |
| १५ | १५ | ०वृत्तिःप. | ०वृत्तिफलको |
| | | | विधिः प० |
| १६ | १३ | ०म्पती | ०म्पति |
| १८ | ९ | पराकपवनाधि | पराकपनाधि |
| १९ | ७ | तस्याश | तस्या अत्र |
| २२ | ४ | सपदा | सम्पदा |
| २३ | १५ | यजि | यज |
| ,, | २७ | त्रयोदशादि | त्रयोदशाहादि |
| २८ | १६ | रक्ष | रूक्ष |
| २९ | २ | शाद्रा | शाद्री |
| | | **आधानप्रकरणम् ।** | |
| ३ | १४ | वंसीया | वसीया |
| ४ | ८ | दितस्तु | दितस्तु |
| ५ | १६ | जमान | जन |
| ७ | २४ | स्पृष्टुं | स्पृष्टुं |
| ९ | १ | तृतीय प्र. | प्रथम प्र. |
| ,, | २६ | मित्तस्वे | मितस्वे |
| १० | १० | य्येवाऽ२ | य्यैवाऽ२ |
| ११ | १ | तृतीय प्र | प्रथम प्र |
| १२ | १३ | ज्यौतिरे | ज्योतिरे |
| १५ | ४ | ण्डे पञ्चम | ण्डे प्रथम |
| १६ | २१ | निरपवन् | निरयपन् |
| ,, | २२ | याममा | याम |
| १८ | ३ | देवर् | दैवर् |
| १९ | २४ | पञ्चम | प्रथम |
| ,, | २५ | ४.४.४। | ४.४। |
| २० | २४ | नीयस्व | नीयास्व |
| २१ | १२ | धुम्तरम् | धुम्तरम् |
| २२ | ९ | नु२ | नु२ |
| २३ | ६ | नु४ | नु५ |
| २६ | २ | मा२स | मा२म |
| २६ | ३ | न्मा४ | न्मा४ |
| २७ | ६ | घृतंवती | घृतवंती |
| २८ | ७ | पाङ्कु२ | पाङ्कु२ |
| ,, | ९ | वा२ | वा२ |
| ३३ | ९ | रु२ | रु५ |
| ३४ | १ | युव२ | युव२ |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
| --- | --- | --- | --- |
| ,, | ३२ | स्कर | स्कार |
| २५ | ५ | सुय | सुय |
| २६ | १८ | पार्थिवाः | पार्थिवा |
| ३७ | १ | ताः | ताः |
| ,, | २ | राः | राः |
| ३८ | १ | जांत | जातं |
| ४३ | २ | तांस् | तांस |
| ,, | ६ | स्तुन्य | स्तुव |
| ,, | ७ | प्रजापतेर्हे | चत्वारि |
| | | पुनराधान प्रकरणम् । | |
| १ | ३ | यः | यः |
| ,, | ,, | पुनरा | पुनरा |
| ५ | २ | प्राः | प्राः |
| ६ | ४ | वीरुहा | वीरुहा |
| ६ | ९ | संभाराः | संभाराः |
| ७ | १ | प्रथमाष्टके | प्रथमकाण्डे |
| ,, | ४ | त्रिः | त्रिः |
| ९ | ४ | स्वाः | स्वाः |
| १० | २० | भाह | भाह |
| १२ | ८ | संभृत्याः | संभृत्योः |
| १४ | २ | प्राः | प्राः |
| ,, | ३ | ,, | ,, |
| १५ | २ | तेन | तेन |
| ,, | २१ | ७ | १७ |

**Correction Slip for English Translation:**

[ Owing to the complicated diacritical marks indicated above several slips have occurred, and the kind Readers are requested to correct them as they find them. ]

*For* Adhāna *read* Ādhāna
,, Ahavanīya ,, Āhavanīya
,, Bhūmi ,, Bhūmi

**Ādhāna Translation.** P. 14, § 61, for *taṇḍalāh* read *taṇḍulāḥ*.
P. 24, § 128, for *paryāpayat* read *paryapaśyat*.

**Table of Transliteration.**

| | | | | | | | | | | | | | | |
| --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- | --- |
| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ए | ऐ | ओ | औ | ं | ः |
| a | ā | i | ī | u | ū | ṛ | ṝ | ḷ | e | ai | o | au | ṁ | ḥ |
| क् | ख् | ग् | घ् | ङ् | च् | छ् | ज् | झ् | ञ् | ट् | ठ् | ड् | ढ् | ण् |
| k | kh | g | gh | ṅ | c | ch | j | jh | ñ | ṭ | ṭh | ḍ | ḍh | ṇ |
| त् | थ् | द् | ध् | न् | प् | फ् | ब् | भ् | म् | य् | र् | ल् | व् | श् |
| t | th | d | dh | n | p | ph | b | bh | m | y | r | l | v | ś |
| ष् | स् | ह्. | | | | | | | | | | | | |
| ṣ | s | h. | | | | | | | | | | | | |

**Accents:** ′ for *udātta*, as in Agní.
` for independent *svarita* as in vīryàm.




# Views and Opinions

OF

Eminent Scholars who have been approached before undertaking the research & publication work of the

**Kṛṣṇa Yajurveda.**

ALLAHABAD,
*November 27, 1933*

My Dear Shastriji,

Many thanks for your note I am very glad to hear that you are making arrangements for a new edition of the Taittiriya text duly arranged and divided into proper sections. Such an edition has long been a desideratum, and one result of this has been that scholars of the Mimamsa have not been able to make that use of the Taittiriya text which they should have done. It is strange that the older generation of Vedic scholars did not deal with the Taittiriya texts as thoroughly as they did with Rigveda or the Shukla Yajurveda text Such an edition as you are contemplating will be very useful to all students of Karmakand in general and our University students and modern scholars in particular, who have neither the time nor the patience to wade through unarranged text I hope you will be able to carry out the edition soon

With all good wishes,

Yours Sincerely,
Sd/- Ganganath Jha

The Mimamsa Grantha Prakasaka Samiti has been doing excellent work. It has now started the much more ambitious scheme of printing and publishing the more important basic texts bearing upon Purva Mimamsa. The Purva-Mimamsa has taken for its basis texts from the Krishna-Yajurveda Samhita and Brahmana These texts are not easily traceable in the Samhita. The new edition that has been planned by the Samiti is calculated to benefit the student of Mimamsa especially as it is bringing out together in one place the texts bearing upon a particular ritual, e g, all the Mantras and other texts bearing upon the Adhana, i e, fire installation, have been brought together in one place, and so on with regard to all the more important rituals The plan resembles to a very large extent that of the Siddhantakaumudi bearing upon the Ashtadhyayi sutras of Panini, and has therefore rightly been styled 'Prakarana-kaumudi

ALLAHABAD,
*10th February, 19[illegible]8*

Sd/- Ganganath Jha

THE UNIVERSITY OF THE PUNJAB.

No. 381/V. C. University Hall, Lahore,

*Dated the 22nd January, 1934.*

From Dr. A. C. Woolner, C. I. E., M. A., D. LITT., F. A. S. B.,
Vice-Chancellor,
University of the Punjab, Lahore.

Dear Sir,

I am in receipt of your letter No. nil dated the 22nd November, 1933 and am glad to learn that you have divided the Text of the Black Yajurveda into the Mantra and Brahmana portions. Indeed there was a need for such a Text. I am sure tho work will prove highly useful to students of the Vedas. The want of this kind of text was, perhaps, one of the chief causes why the Yajurveda is not so widely read in our Universities as the Rigveda is.

Yours truely,
Sd/- A. C. Woolner,
Vice-Chancellor,
University of the Punjab, Lahore.

I have seen some printed pages of The Yajurveda-Prakarana-Kaumudi. The work of this kind is a desideration and will be of great use to scholars who desire to study the Yajurveda and the whole system of sacrifices and rituals followed by the Vedic Sages and Rishis. The authors are treating the Holy Yajurveda in the same manner as Bhattoji Dixit the great Grammarian had treated Ashtadhyayi of Panini in the preparation of his immortal work on Sanskrit Grammar Sidhdhanta Kaumudi. The Mantras in the Yajurveda are all arranged and collected under appropriate topics and thus this collection of classified Mantras will enable the student to pursue the form and details of the sacrifices very easily and intelligently. Western scholars have hitherto taken great pains to study Rig Veda. But the Taittriya Samhita of Krishna Yajurveda has not received at their hands the close and scholastic attention it deserved. The sacrificial system is the very essence of Vedic culture. And any attempt, to interpret that culture, without a close and systematic study of the sacrificial literature of which Yajurveda, Taittriya Brahman and Aranyak are the fountain-heads, is bound to prove unsatisfactory if not altogether unfructuous. The work therefore undertaken by Pandit Mimamsa Bhushan Waman Shastri and his colleagues is of great national and cultural importance It deserves to be liberally patronised by all those Hindoos who feel proud of the rich Heritage left to them by the Ancient seers of the Vedas. I wish this unique and patriotic effort speedy success

3, FEROZESHAH ROAD,
NEW DELHI
*18-8-1938*

Sd/- M. S. ANEY.

# काशीस्थपंडितानामभिप्रायः ।

श्रीमद्भिर्मीमांसा-ग्रंथ-प्रकाशक-समितिप्रवर्तकैः पुण्यपत्तनालंकारैर्महनीयकीर्तिभिः किंजवडेकरोपाह्ववामनशास्त्रिभिः मीमांसाप्रचाराय क्रियमाणानि कार्याणि प्रायो विद्वद्भिः सधन्यवादं सर्वदाऽऽद्रियन्त इति नैतदविदितं सहृदयानाम् ।

कृष्णयजुर्वेदस्य तत्तत्कर्मावबोधानुगुणसङ्ग्रहणेन सभाष्यं मुद्रणमस्माकं परमप्रमोदावहमभूत् । अत्र हि विशिष्टतेयमेव, यत् सिद्धान्तकौमुदी–निर्णयसिन्धुप्रभृतिग्रंथेषु यथा व्याकरणधर्मशास्त्रवाक्यानां प्रकरणानुरोधेन क्रमनिर्मितिर्बोधसौकर्याय भवति, तथैव वेदवाक्यानामपि सङ्ग्रहणं क्रियते । 'सर्वशाखाप्रत्ययमेकं कर्म' इति न्यायेन शाखान्तरीयवाक्यानामप्युपसंहारस्तत्तत्कर्मणि वर्तते, सूत्रकारैस्तथा कृतत्वा, अतोऽस्मिन्नुपसंहारे शाखान्तरीयाणामपि वाक्यानां सङ्ग्रहणं यदि कृतं स्यात् तदा चारुतमत्वमस्य मुद्रणस्य भवेदिति यद्यपि मनसि भाति, तथापि तैत्तिरीयशाखायामाधानादिषु प्रायः स्वशाखीयवाक्यैरेव परिपूर्णता दृश्यते, इति समालोचयतां मनस्तोषायैव भवेदेवन्मुद्रणमिति नो निश्चयः ।

एवंविधसत्कार्यसम्पादनेन धार्मिकजगत उत्तमर्णानां श्रीकिंजवडेकरशास्त्रिमहोदयानां सधन्यवादमभिनन्दनमस्माभिः क्रियत इति ।

श्रीदेवनायक आचार्यः व्याकरणाचार्यः
अध्यक्षः गीर्वाणवाग्वर्धिनी सभा
श्रीराजेश्वरशास्त्री द्रविडः न्यायाचार्यः
हरिराम शुक्लः न्यायाचार्यः

काशी
मितिः माघ शुक्ल १४
सं. १९९४.

# म. म. माधवशास्त्रीभाण्डारीइत्येतेषामभिप्रायः

प्रसीदति नितरामन्तरङ्गं ममैतत् प्राड्विवेदनं कुर्वतः, यत्कृष्णयजुर्वेदस्य तत्तद्यज्ञिय-प्रक्रियानुष्ठानापेक्षितानां सकलानां मन्त्राणां मूलसंहितायां यत्र तत्र विप्रकीर्णरूपेण पठितानां तथा मीमांसोपबृंहितन्यायानुसारेणास्य वेदस्यार्थावगमकालेऽपेक्षितानां तत्तद्यज्ञियांगोपांग-विधानोपयोगिब्राह्मणवाक्यानां चेतस्ततो विप्रकीर्णानामासीच्चिराय क्रमिकविन्यासापेक्षा येन यज्ञमनुतिष्ठासूनां तत्तदर्थमधिजिगांसूनां च सौकर्यं स्यादिति न तिरोहितं विपश्चित्-प्रभिमानाम्। सा चापेक्षाऽनेन ग्रन्थेन पूरितेति। संदृश्यते ह्येवंरूपेण मूलपाठक्रम-मविभज्य विभज्य वा तत्तद्ग्रन्थेषु वेदाङ्गेषु वा दार्शनिकसूत्रप्रभृतिष्वन्वाख्यानकल्पना। तथा हि–तत्रभवता शौनकेन महर्षिणा ऋग्वेदे मण्डलानुवाकसूक्तरूपेण दाशतयीनां विभागे कृतेऽपि तदीयं मूलपाठक्रममपरिहृत्यैव तत्रभवता कात्यायनेन परमर्षिणा अष्टकाध्याय-वर्गादिरूपेण कृता विभागकल्पना सर्वैरादृता विराजत एव; किंबहुना सामवेदीयगृह्यसूत्र-कृतस्तत्रभवतो गोभिलमहर्षेर्जामातृभूतेन कात्यायनेन महर्षिणा सामवेदीयानां कृते श्वशुराज्ञया छंदोगपरिशिष्टं निर्माय सकलवेदसंबन्धिनीषु शाखासु सर्वशाखीयानां कृते अनुष्ठानसौकर्यं संपाद्य पारस्कर इति महनीयं नाम अलम्भि इति वैदिकैतिह्यविदां न तिरोहितम्।

तत्रभवता महर्षिणा पतञ्जलिना व्याकरणाम्भोधिपारदृश्वना शब्दानुशासनं व्याच-क्षाणेन वार्तिककृदुट्टङ्कितानि उक्तानुक्तदुरुक्तानि मनसिकृत्य बहूनामपि व्याकरणानां प्रतिपाद्यविषयस्य पाणिनीये व्याकरणेऽन्तर्भावं समुद्दिश्य लक्ष्यैकचक्षुष्कत्वं पुरस्कृत्य वेदाङ्गप्रधानभूतायामष्टाध्याय्यां कचित्सूत्राणां पौर्वापर्यव्यत्यासः अन्यत्र च योगविभागः अपरत्र च सूत्रसंहितापाठे पदच्छेदवैलक्षण्यादिकं च संपाद्य पाणिनीयव्याकरणस्या-प्रतिमगौरवं शब्दसाधुत्वप्रक्रियासौकर्यं च संपादितमिति सुप्रथितमेव। तथाहि–किंचि-दियात्र दिशं प्रदर्शयामः। "दीर्घादाचार्याणाम्" इत्यत्र सूत्रव्यत्यासः–तदुक्तं शब्दरत्ने "दीर्घादाचार्याणाम्" (पा. सू. ८–४–५२) इत्युत्तरम् "अनुस्वारस्य ययि" (पा. सू. ८–४–५८), "वा पदान्तस्य" (पा. सू. ८–४–५९), "तोर्लि" (पा. सू. ८–४–६०), "उदः स्था" (पा. सू. ८–४–६१), "झयो हो" (पा. सू. ८–४–६२), "शश्छोटि" (पा. सू. ८–४–६३) इति षट्सूत्रीपाठोत्तरं "झलां जश् झशि" (पा. सू. ८–४–५३), "अभ्यासे चर्च" (पा. सू. ८–४–५४), "खरि च" (पा. सू. ८–४–५५), "वावसाने" (पा. सू. ८–४–५६), "अणोऽप्रगृह्यस्य" (पा. सू. ८–४–५७) इति, "पञ्चसूत्र्याः पाठ इति" भाष्यसंमतः पाठः। "हन्तेरत्पूर्वस्य" "श्लिष आलिङ्गने" इत्यादौ अत्पूर्वस्य आलिङ्गने इत्यादिर्योग-विभागः "व्यत्ययो बहुलम्" "लिङ्याशिष्यङ्" इति सूत्रयोः पाठमध्ये लकारप्रश्लेषः इति तत्र तत्र वैयाकरणवरेण्यानां सुविज्ञातमेव।

एवं प्रक्रियाकौमुदीसिद्धान्तकौमुदीकृद्भ्यां रामचन्द्रसूरिभट्टोजीदीक्षिताभ्यां शब्दसाधुत्वसाधनप्रक्रियासौकर्यार्थमष्टाध्यायीसूत्राणां मूलक्रमं विभज्यापि तत्तत्प्रकरणानुसारेण सूत्राणां कृतो विन्यासः शिष्टैः समाद्रियमाणो विराजत एव। एवं तत्रभवता सर्वतंत्रापरतंत्रेण विद्वद्वरेण वाचस्पतिमिश्रेण गौतमसूत्रेषु विद्यमानं मूलक्रममपरिहृत्यैव कृतः प्रकरणभेदो विश्वजनीनतामवगाहत एव।

एवं कृष्णयजुर्वेद( यज्ञिय ) प्रकरणकौमुदीसंपादकेन मीमांसकशिरोमणिना सर्वतंत्रविदा वामनशास्त्री किंजवडेकरमहोदयेन अनुष्ठानसौकर्यार्थं मूलपाठक्रमं विभज्यापि क्रियमाणो विन्यासः शिष्टैः समादृतः स्यादिति नास्माकं लेशतोऽपि संदेहः।

किंच वैयाकरणमूर्धन्यरामचन्द्रसूरिभट्टोजीदीक्षिताभ्यां सूत्रविभागावसरे स्थानक्रमं समादृत्य स्वीयविन्यासप्रामाणिकता संपादिता, एवमेव प्रकरणकौमुदीकृतापि स एव मीमांसीयपंचमाध्यायविनिर्णीतः स्थानक्रमः प्रमाणत्वेन समादृत इति अस्यापि विन्यासस्य प्रामाण्यांशे न कोऽपि संदेहावसरः। स्थानप्रमाणस्वरूपं च मीमांसाभिज्ञातॄणां परिचितमेव, तदितरैस्तु पूर्वमीमांसापंचमाध्यायत एवावगन्तव्यम्। किं च मूलपाठक्रमं विभज्य विन्यासावसरे भट्टोजीदीक्षितादिभिरपि "विप्रतिषेधे परं कार्यम्"। "पूर्वत्रासिद्धम्" इत्यादिष्वपेक्षित पूर्वत्व-परत्व-निर्णयार्थमनुवृत्त्यपकर्षादिप्रयोजनार्थं च मूलपाठस्यक्रम एव समाद्रियते। एवमेव प्रक्रियाकौमुद्यां मूलक्रमं विभज्य विन्यासेऽपि आग्नेयाग्नीषोमीययागयोः पौर्वापर्यनिर्णये यो हि याज्यानुवाक्यामंत्रपाठक्रमः नियामकत्वेन प्रबलं प्रमाणमिति मीमांसायां सिद्धान्तितं तादृशनानाविधसिद्धान्तसंरक्षणार्थं यथावस्थितो मूलपाठक्रम एव समाश्रयणीय इति वैदिकैर्मूलपाठक्रमपरंपरा अवश्यं संरक्षणीयैव, किंच यागक्रमः, याज्यानुवाक्या मंत्रक्रमः, मंत्रविशेषाणां च तत्तत्कार्येष्टिसंबन्धित्वव्यवस्थापनं मूलपाठक्रमाधीनमेवेति सर्वैरपि स एव शरणीकरणीय इति निर्विवादमेव।

किंच "तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन, दानेन, तपसा, अनाशकेन" इति श्रुतौ यज्ञानुष्ठानदानाद्यतिरिक्तं वेदानुवचनं स्वातंत्र्येण विविदिषासाधनमित्युक्तम्। तच्च वेदानुवचनं पारायणाद्यात्मकं भवति, किं च पदक्रमयोः जटाघनादिविकृतीनां च पारायणे मूलपाठक्रम एव शरणीकरणीय इत्यलं पल्लवितेन। सर्वान्ते च कृष्णयजुर्वेद( यज्ञिय )प्रकरणकौमुदीसंपादयितॄणां धन्यवादप्रकाशनं कृत्वा विरमति

लाहोर-पंजाब फाल्गुन वदि १३ शके १८५९ ता. २९।३।३८.

महामहोपाध्यायः माधवशास्त्री भाण्डारी.
व्याकरणवेदान्ताचार्यः साहित्यमीमांसातीर्थः,
लवपुरीयप्राच्यमहाविद्यालय-प्रधानाध्यापकः.

# INTRODUCTION.[1]

## § Svabhāva or nature of the question.

It is well-known that all creation naturally seeks happiness and all *energising* is towards this goal The two questions that arise from this tendency are related to (a) the nature and origin of creation and (b) the mode of behaviour or the *moral code*, devised for the attainment of the goal. The natural tendency of all created beings is towards the possession or enjoyment of the dearest objects (*preyas*), and only by the exercise of discrimination, of the truest (*ireyas*) The means of satisfying this great drive towards happiness are the three great desires (*esanu trayam*) connected with *offspring, wealth* and *fame* (*i e putra-*, *vitta-*, and *loka-*) Connected in turn with these three great desires are the three great debts (*rna*) towards the departed souls (*pitr-*), the sages (*rsi-*) and the gods (*deva-*) For the proper observation of all these different activities the society is divided into four sections (*varna* colour) and with each section are associated the four chief human ideals (*purusartha*) viz *Kama* (desire), *Artha* (property) *Dharma* (moral code) and *Moksa* (beatitude) Through the proper appreciation of these four ideals alone does man rise above his human frailty and reach to the unconditioned absolute state These ideals also represent respectively the four grades of society, viz S udra, Vaisya, Ksatriya and Brāhmana

## §2 Nature of Proof

Since proof is required for arriving at any proper conclusion it is necessary to understand its nature With regard to its definition the different systems have their individual emphasis. Of the nine *pramanas* the Carvākas admit the first only, the Vaisesikas and Buddhists admit the first two, and in regular order Sankhya and one school of Nyaya admit three, the followers of Gautama four, of Prabhakara five, the Vedantins and followers of Kumarila six the Purānas eight, and the Tantras nine The common and most prominent of these is therefore the testimony of words (*S abda-pramana*) if we leave aside the non followers of the Veda Whereas it is possible to doubt the testimony of *pratyaksa* and *anumana*, this *pramana*, being above *frailties*, is trustworthy The highest embodiment of this *pramana* is the Veda.

## §3 The extent of Vedic Literature

The Vedas, coming as they do from the Primordial Being are four in number Rg, Yajus Saman and Atharvangirasa An alternative name is *S'ruti* or *Amnaya* for the Veda. It is also proper to call the Vedas *trayi* in that the Atharvangirasa is included in the first three Vedas This division has been approved by Jaimini In that the Vedas lay down injunctions (*sastra*) therefore are they called *S astra* Each of these Vedas has recensions (*sakhā*) Rg has 21 Yajus 101 Saman 1000 and Atharvana 9 At present the Rgveda has S akala and Baskala the Yajus has Taittiriya, Kānva Madhyandina etc, and the Saman has Kauthumi, Ranayaniya etc., and

1 This represents substantially the arguments of the *Bhumika* in Sanskrit but due to the nature of the discussion some of them are only briefly indicated

*

the Atharvana has Saunakiya and Paippalāda etc In course of time the many different Vedic schools have gradually disappeared Originally Dharma possessed four feet and by gradual loss it is now reduced to one foot only In proportion to this loss is the loss of the Vedic schools

The Veda, consisting of the *Mantra* and *Brāhmaṇa* portion, is designed to guide the course of world evolution through proper action The *mantras* remind one of the necessity of proper action which is timeless These *mantras* arranged in their due order are called the *Samhita* texts, and the remaining portion is called the *Brahmana* text Much discussion has taken place on the question the *Samhita* is the original text the *padas* the modified text or vice versa We are of opinion that the *Samhita* alone is the original form as revealed to the sages through the force of their austerities

The *mantras* have each a sage a divinity and a metre connected with them The *rsi* or sage is he to whom the *mantra* is revealed he is not the author of the *mantra* The subject of the *mantra* is the divinity (*devata*) and the metrical form of the *mantra* is its *Chandas* These *mantras* are again threefold *rk*, *yajus* and *saman* The Brāhmaṇas form that portion of the Veda which is not *mantra* A portion of the Brahmana is called Āraṇyaka The Upanisads are the culminating works in Vedic literature

The Vedas have certain exegetical works attached to them called the *angas*, six in number *siksa*, *kalpasutra vyakarana nirukta*, *chandas*, and *jyotisa* Of these the *kalpasutras* supplement the injunctions given in the Brahmanas and are therefore necessary to our understanding of Vedic ritual Similar to the *angas* are the *upangas* or subsidiary branches of Vedic study *smrti*, *itihasa*, *purana*, *mimamsa* and *nyaya*

Like the Vedas are the subsidiary Vedas (*upaveda*) like *ayurveda dhanurveda* etc

This entire Vedic literature is to be studied by a Brahmin the study is fivefold *adhyayana vicara abhyasana*, *adhyapana* and *japa* The learning aloud is *adhyayana* the interpretation by means of *mimamsa* and *nyaya* is *vicara* repetition aloud is *abhyasana* teaching to others is *adhyapana* and ceaseless repetition is *japa* It is the undisputed right of only Brahmins to study the Vedas in this manner The remaining two castes cannot practise *adhyapana*

## §4 Object of the Vedas

It was mentioned in the beginning that the goal of all creation was the securing of happiness towards which the Vedas contribute fundamental teachings By giving injunctions such as 'by Jyotistoma one should offer sacrifice being desirous of heaven', etc, the Vedas point out the way towards the attainment of happiness The Vedas not only give directions regarding the moral and spiritual duties of humanity, but they also explain the nature and origin of all creation, thus giving rise to two sciences *Karmamimamsa* and *Brahmamimamsa* Further, by pointing out what is the truer (*sreyas*) they wean a person from his attachment to the dearer (*preyas*) thus leading him on to the true goal

This weaning is done gradually through the three great desires (*esaṇā*) and repayment of the three great debts (*ṛṇa*–), for which purpose the society is divided into four castes, each having its particular field of activity. Having divided society into the four *varnas* a further subdivision is effected in the form of *asramas* or stages. The four *purusarthas* are respectively connected with the four *varnas*, and although the *sruti* texts lay greater emphasis on *dharma* and *moksa* they also point out the proper manner in which *artha* and *kama* are to be satisfied.

We have already discussed the nature of the *Mantras* and now we shall discuss the nature and origin of the *Brahmana* portion. This portion is of a twofold aspect *vidhi* or injunction and *arthavada* or discussion on the need of an injunction. These are again of different qualities.

The various injunctions point out to certain transcendental results termed *apurva* in the language of the Mimamsaka. This *apurva* is manifold in its nature *phalapurva, samudayap rva, utpattyapurva* and *angapurva*, i. e. the transcendental results connected respectively with the ultimate result of an action, the totality of results of individual parts of components of a full rite originative or productive subsidiary acts and finally of the subsidiary acts themselves individually.

The rites enjoined by the Vedas are of a twofold nature (a) those satisfying the four great objects (*purusartha*) and (b) those performed for the sake of the rite itself (*kratvartha*). Rites performed for their own sake may not satisfy the immediate good of man. Thus Darsapurnamāsa or Godohana rites are meant for the good of man and not performed for the sake of the rites themselves, for the one leads to the heaven and the other leads to the acquisition of cattle. But the Prayajas are done for their own sake since no immediate good accrues to the performer. The realisation of this immediate good of man may be either *saksat* as in Godohana or *adrsta* as in Darśa purnamasa. There are certain rites which serve both purposes, as for example the giving up of false speech. In Darsapurnamasa false speech uttered causes him distress as well as spoils the effect of the rite itself. Recognising therefore this twofold nature of rites one should discriminate between them.

Those subsidiary actions which lead to the realisation of transcendental results are called the *angas* of a rite. The main act which is called the *pradhana* takes precedence in any rite in the event of there being a conflict in purposes, thus rendering the *anga* fruitless. These *angas* are again subdivided into (a) *aradupa karakani* or directly contributing subsidiary actions and (b) *sannipatyopakarakāni* or indirectly contributing subsidiary actions.

Now despite the existence of different Vedic schools the nature of *karma* or rite is univocal. These rites are sometimes original or primary (*prakrtibhutani*) and sometimes modified (*vikrtibhutani*). Where a primary form or archetype of a rite is prescribed it is *prakrti* and where a special subsidiary rite is prescribed it is *vikrti*. *Prakrti* is three fold. Agnihotra, Isti and Soma, Agnihotra is the archetype of all *homas*, Isti the archetype of all Sauryа and Kāmyesti as well as of Dikṣaniya-Soma

sacrifices and finally the Soma is the source of all Agnistoma and Jyotistoma types of higher sacrifices

These different kinds of rites enjoined by the Vedas may also be classified in another sense in four sections (a) *nitya* or permanent, fixed, rites required to be performed throughout one's life on stated occasions, (b) *naimittika* or occasional for special purposes, (c) *kāmya* or optional rite aimed at a special desire, and (d) *pratiṣiddha* or prohibitory rite

Thus one should perform these rites either in their main or subsidiary forms with due regard to their importance For the proper performance of these rites only the first three *varṇas* are allowed by the Vedas e g "the *brahmaṇa* should set up the fire in spring the *rajanya* in summer and the *vaiśya* in autumn' Thus the *śudra* is prohibited from these activities Women too, independently, cannot perform Vedic rites, but where the Vedas enjoin the performance of rites by couples neither the man nor the woman can act separately, they must act conjointly

In its earlier part the Veda describes in detail the doctrine of sacrifice, but at the same time points out the social aspect of Dharma or legal procedure

Since the entire Śruti texts point towards the performance of these sacrificial rites it is necessary to understand how best we can perform the rites enjoined For this purpose the venerable Ācārya Jaimini composed in four chapters his important *Dharmamīmāmsa*, dealing authoritatively and completely with every aspect of this science On this epoch making *sutra*, Upavarsa, Bhartrmitra, Śabaraswami, Kumārilabhatta, Prabhākara, Murarimiśra, Parthasarathimiśra, Śālikanatha, Khandadeva, Somanātha Śambhubhatta and other great scholars have written commentaries illumining the many dark corners of this science

The sacrificial rites herein enjoined by the earlier part of the Vedas are for the repayment of the divine debt (*deva ṛṇa*) and it is precisely in that connection that the Science of Mīmāmsā has come into being The word *yajña* or sacrifice is derived from the root *yaj* in the sense of *devapūja, sangatikaraṇa* and *dana*, and although it covers properly *jñanayajña*, *dhyāna-*°, *dravya-*°, *tapo-*°, and *brahma-*°, it is generally extended by common usage to *śrautayajñas* like Jyotistoma. This *yajña* consists of 21 divisions seven each for *pāka yajña*, *havir-*° and *soma-*°.

The seven *pāka-yajñas* are Śravanākarma, Sarpabali, Āśrayujīkarma, Pratyavarohaṇa Aṣṭakā, Pārvana, Mādhya and Varsa

The seven *havir-yajñas* are Ādhāna Agnihotra, Darśapurnamāsa, Cāturmāsya Āgrayaṇa, Nirūdhapaśubandhana and Sautrāmaṇī

The seven *Soma* sacrifices are, Agnistoma, Atyagniṣṭoma, Ukthya, Ṣoḍaśī, Vājapeya, Atirātra, and Aptoryāma.

## 5 The present work.

Three schools of Vedic exegesis have come into being the grammatical, the historical and the ritual. The grammarians seek to interpret Vedic texts by applying grammatical analysis, the historians seek to analyse the historical episodes like those of

Hariścandra, Pramaganda etc while the ritualists study only the manner and practice of the *yajñas* All these three schools have been mentioned by Yāska in his *Nirukta*.

From the ritualistic point only the Yajurveda needs description. It is divided into two major recensions called Śukla and Kṛṣṇa The Śukla-Yajus was revealed to Yajñavalkya by Āditya who had assumed the shape of a horse. While Vaiśampāyana was teaching the Yajus which he had learnt from Vyāsa, his disciples undertook severe penance with his permission for atoning an unexpected *bala brahma hatyā* As a result they were called Carakādhvaryus Disregarding them Yājñavalkya decided to perform those austerities by himself Angered by this lack of respect towards other brahmins on the part of Yajñavalkya Vaiśampayana asked him to return the Yajus learnt from him Returning these Yajus hymns Yajñavalkya, seeking others, approached the lord Savitr in worship Now the other sages in the shape of *Tittiri* birds ate up the yajus hymns returned by Yajñavalkya This branch was therefore known thereafter as *Taittiriya* The Branch obtained by Yajnavalkya from the brilliant Sun became known as Śukla or Vajasani *This last appellation is due to the fact that the Sun god revealed it to Yajñavalkya, having first assumed the shape of a horse* It is also called Vajasaneyi This branch was taught by Yājnavalkya to fifteen of his pupils beginning with Kāṇva In that the *mantra* and *brahmana* portions are separate in this *śākha*, therefore the appellation *Śukla* is appropriate and this fact differentiates it from the Kṛṣṇa Yajurveda. The Veda studied by the Carakadhvaryus came to be known as Kṛṣṇa Yajurveda In the Caranavyuhabhāṣya it is mentioned 'Being revealed during midday by the brilliant Surya it is called *Śukla*' In the *Vedopakramana* it is said that the Śukla Yajus is to be studied on the full moon day coinciding partly with the fourteenth day whereas the Kṛṣṇa Yajus is to be studied on the full moon day coinciding in part with the first day of the dark fortnight The Śukla Yajus is generally found to the north of Narmadā and the Kṛṣṇa to its South

The name Kṛṣṇa points out the mixed nature of the text and lack of discrimination between the *mantra* and *brahmana* portions in the Samhita and also a certain lack of order Thus in the 2nd Kanda and 5–6 Prapathakas of the Samhita we have Darśapurnamasa Brahmana and Mantra portion In the Ist Kanda and 6th Prapathaka of the Samhita we have Darsapurnamasa–Yajamana In the Brahmana the 3rd Kanda 7th prapathaka deals with Darsapurnamasadhvaryava and Yajamana, the 2nd and 3rd prapathakas deal with Darśapurnamasa-brahmana These instances may be multiplied This kind of mixture does not exist in the Śukla Yajurveda In the Kṛṣṇa Yajurveda, however, the *mantras* dealing with any one particular rite are not found in one place, they are scattered all over the work, similarly the *brahmana* portion explaining these *mantras* are not found in their proper places Thus according to the traditional arrangement the material is scattered all over the Samhita and Brahmana texts and becomes useless for the ritualist who is not a complete master of this science. In order to obviate the great exertion needed on the part of the

ritualist this new arrangement is being followed.

In the present rearrangement all pertinent material from the Samhitā, Brāhmana, Āranyaka and Upaniṣad sources connected with each ritual is given at one place, indicating the sources of these texts, with Sayana's commentary on them. All quotations are also traced to their sources.

It is said "Whatever sacrifice he studies, by that his desires are satisfied". It is well known that all the sacrifices cannot be performed by every person. Moreover in these difficult times it is not possible to study the Vedas in a proper manner. Even the understanding of the texts is difficult. By an ignorance of the injunctions, lack of wealth, laziness and other causes it is not possible for modern Brahmins to perform these duties properly. But even if the practice is impossible we can derive similar benefit, by at least reading those portions of the Vedas which deal with these individual rites. Such a study is made practicable by this division or rearrangement in proper sections. It may be contended that this partial study will not fulfil our desires since the Vedic injunction inculcates the whole study of the entire Vedas. But those who study the whole Veda will continue doing it inspite of this rearrangement, whereas, persons who desire to read only one rite will utilise gladly the facilities offered by this rearrangement. There is good authority for this rearrangement even in ancient times. Thus Saunaka divides the Ṛgveda into Mandala, Sukta and Anuvaka whereas Katyāyana has Aṣṭakas. A parallel instance can be cited in Panini's *Aṣṭādhyāyī*. Those studying this great work are at times at a loss to understand the proper connection of ideas whereas grammar is made easy by Bhaṭṭoji Dikṣita by rearranging the order of Panini's *sūtras* in his *Siddhāntakaumudi*.

### §6. The different sections.

In this rearrangement we have the following sections:

1 Ādhāna.
2 Punarādhāna.
3 Agnihotra.
4 Anvārambhaṇīyeṣṭi.
5 Darśapūrṇamāsa.
6 Āgrāyaṇa.
7 Piṇḍapitṛyajña.
8 Sautrāmaṇī.
9 Soma.
10 Cayana.
11 Jayādihoma.
12 Devikāhaviṃṣi.
13 Vājapeya.
14 Rājasūya.
15 Aśvamedha.
16 Kāmyeṣṭi.
17 Daśahotra.
18 Agnyādi tad-devatā karma.
19 Savaprakaraṇa.
20 Nakṣatra prakaraṇa.
21 Puruṣamedha.
22 Vṛṣālambha.
23 Vaśāgarbhadarśanādi.
24 Gavāmayana.
25 Hautraprakaraṇa.
26 Sāvitracayana.
27 Upavīta.
28 Pitṛmedha, Brahmamedha.
29 Brahmavidyā.

# भूमिकाविषयानुक्रमः ।

—१—

सर्वं विजयते हि तत्।



# भूमिका।

## (१) स्वभावनिरूपणम्।

१ सुखाभिलापः—इह हि उच्चावचतमे ब्रह्माण्डगोलके सर्वोऽपि जन्तुमान् स्वभावत एव 'सुखं सुखं' इत्यहर्निशं चिन्तयंस्तदेव कामयतेऽन्विष्यति च तदुपायान्।

२ प्रतिपत्तिद्वैविध्यम्—अन्विष्यंश्च द्वे किल प्रतिपत्ती स्वभावतः प्रतिपद्यते, यथा—नानाविधविषयभासुरं दृश्यजालमिदं किमुपादानकम्? कीदृशी चास्य प्रागवस्था? कथमस्य प्रादुर्भावः? कथं चास्य परिवृद्धिः? किमालम्ब्य चास्यावस्थितिः? किमवसानश्चास्य प्रत्याहारः? इत्येका, अपरा च "यथा तथा वा भवतु प्रादुर्भावोऽस्याः सृष्टेः, यतः कुतो वा प्रवर्ततामेष प्रवाहः, यत्रकुत्र वा पर्यवसानमुपैतु, किमनया दुरन्तया चिन्तया? अहं पुनः कतमां सरणिमनुसरेयम्? कं वाऽऽचारं प्रतिपद्येय? कथं वा लिप्सितं लभेय?" इति। इमे च द्वे प्रतिपत्ती प्रतिपद्यमानः पुमानहर्निशं तांस्तानुपायानुपयुञ्जानस्तानि तानि साधनानि जिज्ञासमानस्तानि तानि प्रमाणजातानि सङ्गृह्णानः स्वाभीष्टं सम्पिपादयिषुः साटोपं प्रयतते।

३ श्रेयःप्रेयसी—एवं स्वभावत एव विषयविषयैरिन्द्रियैस्तांस्तान् स्वाभीष्टानापातरमणीयान्विषयानभिभाषंस्तदास्वादनगृध्नुः स्वभावत एव तत्संपादनायाहर्निशमासञ्जयत्यात्मानं। य एते विषयाः स्वाकारवासनोद्भावनेन विसिन्वन्ति पुरुषम्, ते प्रेयःपदेन शास्त्रे व्यपदिश्यन्ते। यत्पुनरग्रे दुरवगाहमिवोद्वेगकरमिव भासमानं केनचित्प्रयत्नेन पुनः पुनरनुशील्यमानं निर्विक्षेपेण चेतसाऽऽस्वादयितुमुपक्रम्यमाणं क्रमेण विगलितवेद्यान्तरमानन्दमनुभावयदन्ते तादात्म्यमेवापादयति, तदेतद्वस्तु श्रेयःपदेन व्यवह्रियते उपनिषदि। जन्तुमतां स्वाभाविकी प्रवृत्तिः प्रेयसि, विमर्शाधीना च श्रेयसि।

४ एषणात्रयम्—एवं सुखं कामयमानो जन्तुस्तत्साधनान्यपि नान्तरीयकतया कामयत एव। एषैव कामना उपायेच्छाशब्देन व्यपदिश्यतेऽभियुक्तैः। इतरेच्छाधीनेच्छा ह्युपायेच्छा, इतरेच्छानधीनेच्छा हि फलेच्छा। अत एवेतरेच्छानधीनेच्छाविषयत्वं फलत्वमामनन्ति शिष्टाः, तादृशं च फलं सुखमेव। तदिच्छायां सत्यामुपायेच्छाऽवश्यम्भाविनी। उपायाश्च पुनः पुत्राः, वित्तं, कीर्तिः, मानः, गोभूहिरण्याद्यर्थजातमित्येवमादय ऐहिकाः, आनुश्रविकाः स्वर्गादिलोकगताश्च विषयाः। तत्र पुत्रोत्पादनाय दारसङ्ग्रहादिविषयिणीच्छा पुत्रैषणेति, गोभूहिरण्यादिवित्तविषयिणीच्छा वित्तैषणेति, मानविभवादिविषयिणीच्छा लोकैष-

णेत्येवमिमास्तिस्र एषणाः प्रथन्ते । तत्र वित्तस्य दैवमानुषभेदेन द्वैविध्याश्रयणेनैहिकपारलौकिकविषयकेच्छाया अनुगमेन लोकैषणायामन्तर्भावः सुकर इति द्वे एवैषणे इत्यपि विद्वांसो वर्णयन्ति । ताश्चैता एषणाः स्वाभाविक्यः ।

५ ऋणत्रयम् (पितृऋणम्)—सुखं पुनरिन्द्रियार्थसंयोगजन्यमेवेति निश्चिन्वाना विपन्न इन्द्रियाधिष्ठानभूतेऽस्मिन् देहे साम्प्रतमुपलभ्यमानैः पशुपुत्रकलत्रादिभिर्वियुज्येमहि, तवश्च सुखात्परिभ्रष्टा भवेमेत्यवश्यम्भाविनोऽपि मृत्योर्बिभ्यतश्चिरस्थायित्वमेवात्मनोऽभिलषन्ति जनाः । नियतेर्दुरुल्लङ्घनीयतामाकलयन्तो देहे विनष्टेऽपि "यावदस्मिंल्लोके पुरुषः पुण्येन कर्मणा श्रूयते, तावदयं स्वर्गे लोके वसति" इति श्रुत्यनुरोधेन पुत्रपौत्रादिक्रमेण गृहक्षेत्रकलत्रादिकाङ्क्षाश्वतं प्रवर्तयिष्याम इति सम्भावयन्त आत्मनः पुरुषायुषावस्थानं, स्वोपदर्शितमार्गानुगामिन्याः प्रजायाः सान्तत्येनाभिवृद्धिं च स्वरसतः कामयमानाः संदृश्यन्ते । रागत एव सर्वेषामुपस्थादीन्द्रियतर्पणे प्रवृत्तिः । तत्र च बलवत्प्रवर्तमाना अनायासेनैव सामान्यतः प्रजामनुविन्दन्ति । अवश्यं हि प्रजोत्पादनं गृहिणाम् । पुत्रपौत्रादिपरम्परया शाश्वतावस्थानं यच्चिकीर्षितं पितृपितामहादीनां, तदवश्यं निर्वोढव्यं पुंसा । अन्यथा हि तदभीष्टानिर्वहणरूपमृणं बाधते । तन्निर्वहणमेव पितृणापाकरणं समामनन्त्यभियुक्ताः । (ऋषिऋणम्–) एवं निसर्गत एव सर्वः पुरुषः पश्वादिभ्य आत्मनो वैलक्षण्यं ज्ञानप्रचयेनैव मन्यमानोऽहर्निशमधिकाधिकं ज्ञानं सञ्चिचीषते । तच ज्ञानं बाह्यैरिन्द्रियैर्मनसा च जायमानं नालन्तं तृप्तिमावहतीत्यतीन्द्रियविषयकमपि किञ्चिज्ज्ञानं स्यादिति सम्भावयति, तत्र च प्रमाणमपि यावच्छक्यमन्विष्यति, तादृशज्ञानसाधनं च बहोः कालादध्यायपरम्परया प्रवर्तमानं वेदराशिमेव समाकलयन्त्यपित्रादिपरम्परया स्वयं सम्पादितं प्रमाणभूतं स्वाध्यायं स पुत्रोऽपि यथावदनुवर्तयामित्यनुसन्दधानः सञ्चिकीर्षत्युपनयनादिना पिता पुत्रम् । अतो ज्ञानाभिवृद्धौ स्वारसिक्येव प्रवृत्तिर्दृश्यते लोकानाम् । तत्र ज्ञानसाधनमागमादन्यच्छ्रेयस्करं प्रमाणं नोपलभन्ते । आगमश्च तत्प्रवर्तकैर्ऋषिभिः शिष्यप्रशिष्यप्रणाड्याऽध्यायपरम्पराविच्छेदेनानुप्राप्यमाणो "मयाप्येतनी सन्ततिमनुप्रापणीय इत्येषा कार्यधूर्मदीयशिरसि निपतिता" इति जानन्तः परम्परामनुपालयन्तीत्येतदार्षमृणमित्याख्यायते । (देवऋणम्–) एवं त्यागस्वभावो हि पुमांस्तं समर्थजातं मनसा त्यजत्येवास्त इति तादृशमधिकारिणमुपलभ्य देवतोद्देशेन द्रव्यत्यागरूपं यागं विधत्ते श्रुतिः । प्रत्यहं पचनादानगमनविसर्गानन्दात्मिकां लोकयात्रां निर्वहन् भूताभिमानिभिर्देवैरेव सत्तद्विषयसन्निधापनेनोपक्रियमाणः किं बहुना तदनुग्रहाभावे शलाकामपि स्पन्दयितुमशक्तो देवानामुपकारभारं शिरसि वहन्नात्मानं मोचयितुमर्हतीति । एतद्धि देवऋणमित्याख्यायते ।

६ चातुर्वर्ण्यम्—चातुर्वर्ण्यं नाम–जन्मान्तरानुशीलितपरिचरण-कृषि-पराक्रम-विज्ञानवतां चतुर्विधानां पुरुषाणामिहलोकस्थैव शूद्रवैश्यक्षत्रियब्राह्मणभावमुपजग्मुषां स्वभावविभजनमेव । यत्तु–कैश्चिदुच्यते "अन्यत्राविद्यमानोऽयं चातुर्वर्ण्यविभागो भारतीयैरेव स्वक-

पोलेन कल्पितो जनानां मनसि पारस्परिकं विद्वेषमुपजनयन् श्रेयसो वियोजयति भारतीयान्, पातयति चावनतिगर्ते" इति । तदेतदसमञ्जसम्, एकस्मिन्नेव गृहे चत्वारो भ्रातरः कौटुम्बिकीं धुरमुद्वहन्तः श्रमं विभज्य स्वस्वानुरूपं कर्म कुर्वाणाः सप्रणयं साभिमानं च लोकयात्रां निर्वहन्ति, तद्वदेव स्वभावनियतानि कर्माणि कुर्वाणाश्चत्वार एकामेव राष्ट्रधुरं सप्रणयमुद्वक्ष्यन्ति, अत एतस्यैव स्वभावप्रभवैर्गुणैर्विभज्य वर्णव्यवस्थां तानि तानि कर्माण्युपदिशति श्रुतिः । स्वभावश्चैष समेषामपि मानुषाणां साधारणो निखिलेऽपि जगतीतले सूक्ष्मो जागर्त्येव । परं तमेतं विविच्य पूततमैः समुचिततत्तदाचारैर्दार्ढ्यमापादयापादविच्छेदेनासङ्कीर्णतया वर्णव्यवस्थां पर्यपालयन्नार्या इति महदिदं पौष्कल्यं भारतीयानामखिलमहीमण्डलसमभिनन्दनीयम् ।

७ पुरुषार्थाः—सर्वेषाम् स्वभावत एव सुखमभिलषणीयमित्यसकृदवोचाम । तदेव च पुरुषैरर्थ्यमानत्वात्पुरुषार्थपदेनाभिलप्यते । तच्च पुरुषस्वभाववैचित्र्याच्चतुर्विधमभीप्स्यते । (कामः–) केचित्–विषयेन्द्रियसंयोगजन्यमेव सुखमनुविन्दन्तः कृतार्थमात्मानं मन्वते । (अर्थः–) इतरे तु–अखिलविषयाणां सम्पादकं रिक्थमेवाकलयन्तस्तत्प्राप्ति–तत्परिवर्धन–तत्सञ्चय–तदभिमर्शन–तत्परिगणनादिजन्यं सुखमेव प्रधानं मन्यमानास्तत्सम्पादनेन धन्यमात्मानमाकलयन्ति (धर्मः–) अपरे पुनरुदारधिषणाः–ऐहिकं पारत्रिकं च मानकीर्तिमसुखादिनिबन्धनं शर्म श्रेयस्तमं मन्यमानास्तदर्थमेव प्राणैरपि पणैरायुरुपक्षपयन्ति, कृतार्थयन्ति च स्वात्मानम् । (मोक्षः–) अन्ये पुनर्महात्मानः–ऐहिकं पारत्रिकं च दृश्यजातं 'न नैजं सुखं सम्पादयितुमीष्टे मृगतृष्णिकासलिलमिव' इति निश्चिन्वाना दृश्यविमोकेन स्वरूपानुसन्धानेनैकात्यन्तिकं दुःखासम्भिन्नं निसारितवेद्यान्तरं कमपि माधामभूमिमानन्दं प्रेप्सन्तस्तदर्थमेव च सर्वत्यागवृत्तिमाश्रयन्तस्तृणमिव ब्रह्माण्डभाण्डं सम्भावयन्तः स्वात्मानमेव निष्कलं ध्यायमाना अमृतमये ह्रद इव निमज्जयन्त्यात्मानम् । इदं पुनश्चतुर्विधमपि सुखं कामार्थ–धर्म-मोक्षशब्दैरभिलपितुं पार्यते, अभिलपन्ति चाभियुक्ताः । एवंविधं च चतुर्विधं सुखं प्रधानं मन्यमानानां क्रमशः शूद्रवैश्यक्षत्रियब्राह्मणाख्या अपि व्यपदेष्टुं शक्यन्ते । ऐन्द्रियकमेव सुखं प्रायेण श्रेयस्तमं मन्यते शूद्रः । अर्थलाभेनैव कृतार्थं स्वं मन्यते वैश्यः । मानकीर्त्याद्यभ्युदयसुखमेव परमं मन्यते क्षत्रियः । ज्ञानजन्यस्वानन्दसाम्राज्यलाभमेव श्रेयांसं मन्यते ब्राह्मणः । बाहुल्येनैता वृत्तयः सन्दृश्यन्ते तेषु तेषु ।

## (२) प्रामाण्यविचारः ।

८ प्रमाणलक्षणम्—जगति 'मानाधीना मेयसिद्धिः' इति न्यायेन निर्णिनीषितं किमपि वस्तु प्रमाणेनैव निर्णेतव्यं भवति । प्रमाणं च प्रमाकरणम् । प्रमा हि नाम सा, यस्या उत्तरकाले बाधबुद्धिर्न सम्भवति, या चानधिगतं वस्तु विषयीकरोति । यथाच–अनधिगताबाधितार्थबोधकत्वं प्रामाण्यम् ।

९ प्रमाणानि—प्रत्यक्षानुमानशब्दोपमानार्थापत्त्यनुपलब्धिसम्भवैतिह्यचेष्टा इति प्रमाणानि नव ।

१० प्रमाणानां नैकविधत्वम्—तस्य चेयत्तायां विप्रतिपद्यन्ते दार्शनिकाः—

( १ ) प्रत्यक्षमेकमेव प्रमाणमिति चार्वाकाः सङ्गिरन्ते । प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षप्रमाणस्य लक्षणम् । ज्ञाने प्रत्यक्षत्वञ्चेन्द्रियार्थसन्निकर्षोत्पन्नत्वम् । तथाच "सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तम् विद्यमानोपलम्भनत्वात्" इति सूत्रयामास महर्षिजैमिनिः १ । १ । ६ ।

( २ ) प्रत्यक्षमनुमानं चेति द्वे प्रमाणे इति वैशेषिकाः, बौद्धाः, आर्हताश्च । अनुमानं चानुमितिकरणम्, अनुमितिश्च धूमादिरूपव्याप्यज्ञानेन पर्वतादौ जायमानं वह्न्यादिरूपव्यापकज्ञानम् । तत्र वैशेषिकाः शब्दं प्रमाणयन्तोऽपि "एतानि पदानि स्मारितार्थसंसर्गपूर्वकाणि आकाङ्क्षादिमत्पदकदम्बकत्वादस्मदुच्चारितवाक्यवत्" इत्यनुमानविधयैव तत्प्रामाण्यमाचक्षत इति तेऽपि प्रमाणद्वयवादिन इत्याख्यायन्ते ।

( ३ ) प्रत्यक्षानुमानशब्दाख्यानि प्रमाणानीति साङ्ख्यादयः । प्रत्यक्षानुमानोपमानानि त्रीणि प्रमाणानीति नैयायिकैकदेशिनः ।

( ४ ) प्रत्यक्षानुमानोपमानशब्दाश्चत्वारि प्रमाणानीति गौतमीयाः ।

( ५ ) प्रत्यक्षानुमानोपमानशब्दार्थापत्तयः पञ्च प्रमाणानीति प्राभाकराः ।

( ६ ) प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धयः षट् प्रमाणानीति भाट्टा वेदान्तिनश्च ।

( ७ ) सम्भवैतिह्ये इत्यधिके द्वे प्रमाणे इत्यष्टप्रमाणवादिनः पौराणिका ऐतिह्यविदश्च ।

( ८ ) चेष्टापीति नवप्रमाणवादिनस्तान्त्रिकाः । उपमानादीनां प्रमाणानां लक्षणानि विस्तरभिया नेह वितन्यन्ते ।

११ शब्दप्रमाणप्राबल्यम्—एवं विप्रतिपन्नेष्वपि दार्शनिकेष्वास्तिकदार्शनिकाः शब्दस्य प्रामाण्ये न केऽपि विवदन्ते । अथैषां प्रमाणानां कृतायां बलाबलचिन्तायां शब्द एव बलवत्प्रमाणमिति समस्वरमङ्गीक्रियते प्रामाणिकैः । यतो हि प्रत्यक्षादिषु प्रमाणेषु पुरुषमतिसंस्पर्शाद्भ्रमप्रमादविप्रलिप्सादयो बहवो दोषाः संभवेयुः, सम्भवन्तश्च तत्प्रमाणजन्यासु ज्ञप्तिषु तदभाववद्विशेष्यकत्वावच्छिन्नतत्प्रकारकत्वरूपमप्रामाण्यं प्रत्याययेयुः । प्रत्यक्षमपि इन्द्रियदोषात्, प्रमातृदोषात्, प्रमेयदोषात्, क्वचिदागन्तुकदोषाच्च याथातथ्येन वस्तुतत्त्वबोधयितुं न पार्यते, प्रत्युत विपर्ययमेवावबोधयति, यथा—चन्द्रप्रादेशिकत्वप्रत्यक्षम्, यथा वा—चन्द्रातपादौ रक्तवस्त्रस्यापि नीलिमप्रत्यक्षम् । एवमन्यत्रापि यथायथमूह्यम् । सदेवं प्रत्यक्षस्यैव विपर्ययजनकत्वे तदुपजीवकानामनुमानादीनां विपर्ययजनकत्वे कः संशयः ? अत्र भ्रमप्रमादादीनां पुरुषदोषाणां मनागपि न संस्पर्शः, यद्विषये

चातीन्द्रिये प्रत्यक्षादीनि प्रमाणानि प्रसरमलभमानानि कुण्ठीभवन्ति, तादृशमलौकिकमचिन्त्यं तत्त्वमवगमयच्छास्त्रमेव प्रमाणमूर्धन्यभावमाटीकत इति नैतत्तिरोहितं प्रेक्षावताम् ।

## ( ३ ) वेदविस्तारः ।

**१२ वेदस्वरूपादिविचारः**—वेदः, श्रुतिः, आम्नायः, ब्रह्म, त्रयी, शास्त्रमित्यनर्थान्तरम् । वेदः—"विद्यते—ज्ञायते, लभ्यते वाऽनेन पुरुषार्थः" इति व्युत्पत्त्या पुरुषार्थसाधनभूतोऽनादिसिद्धो मन्त्रब्राह्मणरूपः शब्दराशिः । यद्वा—

'प्रत्यक्षेणानुमित्या वा यस्तूपायो न बुध्यते ।
एनं विदन्ति वेदेन तस्माद्वेदस्य वेदता ॥
प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते' ॥ ४ ॥

श्लो० वा० शब्दपरिच्छेदः

इति वचनादिष्टानिष्टप्राप्तिपरिहारार्थमलौकिकमुपायं वेदयति ज्ञापयति इति वेदः 'विद ज्ञाने' इति धातोः । मीमांसकास्तु—शब्दस्य नित्यत्वमिच्छन्तोऽपौरुषेयं वाक्यं वेद इति लक्षयन्ति । स ह्यव्यभिचारेण तत्तत्स्वरवर्णमात्रापूर्वकमधिकारिभिः सर्वकालं सर्वदेशेषु पठ्यमानोऽनादिरिति निश्चीयते । उपष्टभ्नाति चैनमर्थं 'यः कल्पः स कल्पपूर्वः' ( मीमांसान्यायप्रकाशः ) इत्यादिव्याप्तिसिद्धमनुमानम्, 'वाचा विरूपनित्यया' (ऋ.सं.८–८–६४–६) इति श्रुतिश्च । केचित्पुनः शब्दानां नित्यत्वमसहमानाः पुरुषप्रणीतमेव वेदं मन्यन्ते । पुरुषस्तु नास्मदादिः, येन भ्रमप्रमादविप्रलम्भादिदोषसंस्पृष्टत्वेनाप्रामाण्यं वेदस्य शङ्क्येत । किन्तु सर्वज्ञः सर्वशक्तिः क्लेशकर्मविपाकाशयैरपरामृष्टः परमेश्वर एव । तत्प्रणीतत्वाद्वेदस्य प्रामाण्यम् । अत एव शास्त्रयोनित्वाधिकरणे ( ब्र.सू.भा. १।१।३ ) ऋग्वेदादिशास्त्रकारणत्वाद्ब्रह्म सर्वज्ञमिति समर्थितमिति । वस्तुतस्तु—नैतावता वेदस्य पौरुषेयत्वमापतति, यतः "अस्य महतो भूतस्य निःश्वसितमेतद्—यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरसः" ( २–४–१० ) इत्यादिश्रुत्या निःश्वसितत्वाभिधानेनार्थानुसन्धानपूर्वकमनुच्चरितत्वान्न तत्प्रणीतत्वम् । 'अर्थं बुध्वा वाक्यरचना' इति न्यायेन स्वोत्प्रेक्षाविषयार्थाभिसन्धिपूर्वकोच्चारणाविषयत्वमेव हि तत्प्रणीतत्वम् । यथा—रघुवंशमहाभारतादौ । अथवा सजातीयोच्चारणानपेक्षोच्चारणविषयत्वमेव पौरुषेयत्वम् । सर्गाद्यकाले भगवान् परमेश्वरः पूर्वसर्गसिद्धवेदसमानानुपूर्वीकं वेदं ब्रह्मण उपदिशतीति सजातीयोच्चारणापेक्षत्वादेवेश्वरोच्चारणस्यापि न पौरुषेयत्वं प्रसज्यते । सर्गादिमारभ्याद्ययावदध्यापकपरम्परया 'श्रूयते' इति श्रुतिः कर्मणि क्तिन् । म्ना अभ्यासे इति धातोः आ—समन्तात् 'अभ्यस्यते' इत्याम्नायः । वेदाभ्यासो हि द्विजानामावश्यक इत्यवोचाम । 'बृहि वृद्धौ' इत्यतो विस्तृतिरूपवृद्धिमत्त्वात् "अनन्ता वै वेदाः" इति श्रुतेर्ब्रह्मशब्दो वेदमप्याचष्टे । 'वेदस्तत्त्वं तपो ब्रह्म' इति कोशात् । वेदस्य ऋग्यजुःसामरूपत्वात्त्रयी, त्रिधैव व्यभाजि

भगवानाम्नायो जैमिनिना । यथा चैतत्तथाऽभिधास्यते । न चात्र शङ्कनीयम्—'अथर्वाख्यचतुर्थवेदस्य सत्त्वात्कथं त्रयीति कथ्यत इति । उक्तप्रकारत्रय एव तस्यान्तर्भावात् । आथर्वणिका मन्त्राः पादव्यवस्थावन्तो ऋक्ष्वन्तर्भवन्ति, तदितरे यजुःषु । अनन्तानां वेदराशीनां साकल्येनाध्येतुमशक्यत्वादध्ययनसौकर्याय दयालुभिर्बादरायणादिभिः पूर्वाचार्यैर्वेदश्चतुर्धा, तत्र च प्रतिवेदमनेकधा शाखोपशाखादिभिर्व्यभाजि । नैतावता जैमिन्युक्तासङ्कीर्णऋगादिलक्षणानुरोधेन त्रयीत्वं व्याहन्यते ।

'शासु अनुशिष्टौ' इति धातोः 'हिताहितमनुशास्ति' इति शास्त्रं वेदः । तदनुसारित्वेन चान्येषु शास्त्रशब्द उपचर्यते, धर्मशास्त्रं, न्यायशास्त्रमित्यादौ । अत एव च 'शास्त्रयोनित्वात्' 'तस्माच्छास्त्रं प्रमाणं ते' इत्यादौ शास्त्रपदेन वेद एव विवक्षितः । अयं च वेदः शौनककात्यायनप्रभृतिभिराचार्यैर्मण्डलानुवाकादिरूपेणाष्टकाध्यायादिरूपेण चाध्येतृसौकर्याय विभज्य दर्शितः ।

१३ शाखास्वरूपम्—अपरिच्छेद्यस्य वेदमहावृक्षस्य चातुर्होत्रे यज्ञे विनियोगसौकर्यमापादयितुमृग्यजुःसामाथर्वरूपेण विभज्य पैलवैशम्पायनजैमिनिसुमन्तूंश्चतुरः शिष्यानध्यापयामास भगवान् बादरायणः । ते चाध्यापिताः स्वं स्वं वेदमनेकधा विभज्य शिष्यानध्यापयामासुः । त एव वेदविभागाः संहिताब्राह्मणारण्यकरूपाः शाखाशब्देनोच्यन्ते ।

१४ शाखाभेदाः—एकविंशतिधा बाह्वृच्यम्, एकशतमध्वर्युशाखाः, सहस्रवर्त्मा सामवेदः, नवधाऽथर्वणः इति महाभाष्योदाहृतवचनाच्चतुर्ष्वपि वेदेषु बह्व्यः शाखाः सन्तीति प्रतीयते । तासु च साम्प्रतमृग्वेदे शाकलबाष्कलादयः, यजुर्वेदे तैत्तिरीयकाण्वमाध्यंदिनादयः, सामवेदे कौथुमीराणायनीयादयः, अथर्वणवेदे च शौनकीयादय इति कतिपया एव शाखा समुपलभ्यन्ते, 'भुवनानि विष्णुवृन्दानि गिलित्वा रुद्रकोटयः' इत्यादिना तोष्टूयमानमहामहिमशालिनः किमिव हि नाम दुष्करं कालात्मकस्य परमेशितुः । न केवलं वेदशाखानामेव, अपितु जन्मसंस्कारादीनामप्युच्छेदो दृश्यते, अत एवाहुर्न्यायकुसुमाञ्जलावुदयनाचार्याः—

"जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।
ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम्" ॥ २–३ ॥

पूर्वं हि मानस्यः प्रजाः समभवन्, ततोऽपत्यकप्रयोजनमैथुनसम्भवाः, ततः कामावर्जनीयसन्निधिजन्मानः, इदानीं देशकालाद्यव्यवस्थया पशुधर्मादेव भूयिष्ठाः । पूर्वं चरुप्रभृतिषु संस्काराः समाधायिषत, ततः क्षेत्रप्रभृतिषु, ततो गर्भादिषु, इदानीन्तु जातेषु लौकिकव्यवहारमाश्रित्य । पूर्वं सहस्रशाखो वेदोऽध्यगायि, ततो व्यस्तः, ततः पदक एकः, इ-

दानीं तु क्वचिदेका शाखेति । पूर्वमृतवृत्तयो ब्राह्मणाः प्राद्योतिषत, ततोऽमृतवृत्तयः, सम्प्रति प्रभूतसत्यानृतकुसीदपाशुपाल्यश्ववृत्तयो भूयांसः । पूर्वं दुःखेन ब्राह्मणैरतिथयोऽलभ्यन्त, ततः क्षत्रियातिथयोऽपि संवृत्ताः । ततो वैश्यानेशिनोऽपि, सम्प्रति शूद्रान्नभोजिनोऽपि । पूर्वममृतभुजः, ततो विघसभुजः, ततोऽन्नभुजः, सम्प्रत्यर्घभुज एव । पूर्वं चतुष्पाद् धर्म आसीत्, ततस्तप्यमाने तपसि त्रिपात्, ततो म्लायति ज्ञाने द्विपात्, सम्प्रति जीर्यति यज्ञे चैकपात् । सोऽपि पादो दुरागतादिविपादिकाशतदुःस्थोऽश्रद्धामलकलङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यस्तथेतस्ततः स्खलन्निवोपलभ्यते इति ।

१५ कर्मणि मन्त्राणामावश्यकता विचारः—मन्त्रब्राह्मणोभयात्मके वेदे मन्त्रप्रकाराः क्वाभिमुखोक्तिविषयीभूता मन्त्राः प्रयोगसमवेतमर्थं स्मारयन्तः कर्मणोऽङ्गभावमुपयान्ति । ननु मन्त्रैरेव देवादयः प्रयोगसमवेता अर्थाः स्मर्तव्या इति कोऽयमभिनिवेशः ? । यावता नामाख्यातोपसर्गनिपातादिभिर्मन्त्रगतानुपूर्वीभाग्भिस्तद्विपरीतक्रमभाग्भिर्वाऽर्थाः स्मर्तुं शक्यन्त इति । नैष दोषः । पुरुषाणामनित्यविज्ञानवत्त्वादशिक्षितत्वान्मन्दशिक्षितत्वाद्विस्मरणशीलत्वाद्वा ते यथार्थं देवादीन्नामाख्यातोपसर्गनिपातादिभिर्नाभिदध्युः । ततश्च देवानामपराध्येयुरयथावत्प्रयुञ्जानाः । ततश्च सर्वार्थप्रत्यक्षदृशो देवाः स्वल्पमप्ययथावदभिधानं न मर्षयेयुः । अमर्षयन्तश्च नोपतिष्ठेयुः कर्मणि । देवताविहीनं च कर्म न स्वं फलं प्रसवितुमीष्टे, इत्येवं कर्मफलासम्पत्तिरेव प्रसज्येत । प्रत्युत दुरितमप्युत्पद्येत । तस्मान्मन्त्रैरेव मन्त्रार्थः स्मर्तव्यः । अत एव नामाख्यातोपसर्गनिपाताः कयाचित्प्रयोगपरिपाट्या व्यवस्थिता मन्त्रा इति व्यपदिश्यन्ते । अत एव चाह भगवान् यास्कः–"पुरुषविद्यानित्यत्वात्कर्मसम्पत्तिर्मन्त्रो वेदे" ( निरु. २–७ ) इति ।

१६ मन्त्रानर्थक्यविचारः—ननु मन्त्राणां नियतानुपूर्वीकत्वाल्लोके चार्थवतां शब्दानामानुपूर्वीविभेदेऽपि विशिष्टैकार्थप्रतिपादकत्वादेते मन्त्रा अनर्था एवेति न कर्माङ्गतामावहन्ति । किञ्चार्थप्रतिपादकत्वाभ्युपगमेऽपि क्वचिन्मन्त्राणां प्रयोगानन्वय्यर्थबोधकत्वं संदृश्यते । यथा–'ओषधे त्रायस्वैनम्', 'स्वधिते मैनं हिंसीः' इत्यादिषु । क्वचिच्च मिथो व्याहतार्थबोधकत्वमपि संलक्ष्यते, यथा–'एक एव रुद्रोऽवतस्थे न द्वितीयः,' 'असङ्ख्याताः सहस्राणि ये रुद्रा अधिभूम्याम्' इत्यादौ । तस्मादनर्थका मन्त्राः कर्मकरणतां न प्रतिपद्यन्त इति चेन्नैवम् । लोके हि यादृशाः शब्दा यादृशमर्थं समर्पयितुं प्रामाण्यमुपयान्ति, तादृशा एव शब्दा मन्त्रेष्वानुपूर्वीविशेषभाञ्जो दृश्यन्त इति तत्सामान्यान्मन्त्राणां प्रामाण्यं दुर्निवारम् । केवलं नियतानुपूर्वीकत्वमेव यद्यनर्थत्वे हेतुः स्यात्, "इन्द्राग्नी, पितापुत्रौ" इत्यादिनियतानुपूर्वी-

१ ऋतमुञ्छशिलं ज्ञेयममृतं स्यादयाचितम् । मृतं तु याचितं भैक्षं प्रमृतं कर्षणं स्मृतम् ॥
सत्यानृतं तु वाणिज्यं तेन चैवापि जीव्यते । सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत् ॥
मनुस्मृतिः ४–५–६.

२ अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात्—मनुस्मृ. ३–११८

काणां प्रयोगाणामर्थवत्त्वमेव नोपपद्येत । अतो न युज्यते नियतानुपूर्वीकत्वेन मन्त्राणामनर्थत्वशङ्का । नापि विरुद्धार्थप्रतिपादकत्वेन तादृशी शङ्का घटते । 'स्वधिते मैनं हिंसीः' इत्यत्र यद्यपि छिदारूपा हिंसाऽऽपाततः प्रतीयते, तथापि यज्ञकर्मोपयोगित्वादभ्युदयार्थत्वेन तस्याः क्रियाया हिंसात्वमेव नास्ति, परमारोग्यसम्पादनाय चिकित्सकस्य रुग्णाङ्गुलिविच्छेदनरूपक्रियाया इवेति न विरोधः । 'एको रुद्रो न द्वितीयोऽवतस्थे' इत्यत्रापि रुद्रस्य परमैश्वर्ययोगादेकरूपधारणं सहस्रधावस्थानं चोपपद्यते इति न काचिदनुपपत्तिः ।

१७ मन्त्राणां संहिताविचारः—त एते मन्त्रा आनुपूर्वीविशेषेण समुचिताः संहितापदेन व्यपदिश्यन्ते वैदिकैः । तदितरो वेदभागो ब्राह्मणशब्देन व्यवह्रियते । इयं हि संहिता रावणादिभिर्विभज्यमानानां पदानां प्रकृतिः, तद्विकाराश्च पदानीति केचिदाचार्या मन्यन्ते । अपरे पुनः पदान्येव संहन्यमानानि संहिता भवति, अतः पदान्येव प्रकृतिः, विकृतिः संहितेति सङ्गिरन्ते । किम्पुनरत्र साधीयः ? इति भवति वीक्षा, 'संहिता प्रकृतिः पदानि विकृतिः, उताहो पदान्येव प्रकृतिर्विकृतिः संहिते'ति । अत्रैषा समाहितिः—मन्त्रद्रष्टॄणामृषीणां तपःप्रभावेणाभिव्यज्यमानो मन्त्रः संहितारूपेणैवाभिव्यज्यते न पुनः पदैः, ब्राह्मणा अप्यनूचानाः संहितामेव पूर्वमध्यापयन्ति, अधीयते चाध्येतारः, मन्वते च तावतैवात्मानमधीतस्वाध्यायम्, यज्ञकर्मस्वपि संहितयैव मन्त्रा विनियुज्यन्ते न पुनः पदैः, यदि पदान्येव प्रकृतितामविन्दिष्यन् तर्हि पदैरेव ऋषीणां मन्त्रोऽभिव्यज्येत, पदान्येवाध्यापयिष्यन् ब्राह्मणा अध्यैष्यन्त चाध्येतारः, पदैरेव विनियोक्ष्यन्त मन्त्राः कर्मसु, नत्वेवमत्सर्वमस्ति । तस्मादेतैर्हेतुभिः संहितैव प्रकृतिर्विकृतिः पदानीति स्पष्टं प्रतीमः ।

१८ मन्त्राणामृषिदैवतछन्दोविचारः—मन्त्राणामृषिः, दैवतं, छन्द इत्येतत्त्रयमविदित्वा क्रियमाणं कर्म नैव फलेमहितामभुत इति सर्वेषामाचार्याणां समयः । श्रुतिश्चैवमभिधत्ते—"मन्त्राणां ब्राह्मणार्षेयछन्दोदैवतवित् याजनाध्यापनाभ्यां श्रेयोऽधिगच्छतीत्येताभ्यामेवानेवंविदो यातयामानि छन्दांसि भवन्ति, स्थाणुं वर्च्छति, गर्ते वा पात्यते, प्रमीयते वा, पापीयान् भवतीति विज्ञायते" (ऋ. सर्वा. ) इति । स्मर्यते च—

"अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ॥
योऽध्यापयेज्जपेद्वापि पापीयाञ्जायते तु सः ॥ १ ॥" इति । ( षड्गुरुभाष्ये.)

अपि च—"ऋषिच्छन्दो दैवतानि ब्राह्मणार्थं स्वरावपि ।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते" ॥ इति । ( षड्गुरुभाष्ये.)

विनियोगोऽपि मन्त्राणामवश्यं विज्ञेयो भवति । ( ऋषयः—)मन्त्राणां द्रष्टारः ( स्मर्तारः ) ऋषयः, न पुनः कर्तारः । "कालापकं काठकं" इति संज्ञा तु "तेन प्रोक्तं" इत्यनुशासनानुरोधेन कलापकठादिऋषिकर्तृकप्रवचनविषयत्वेनाप्युपपद्यते । अत एव भगवाञ्जैमिनिः—"आख्या प्रवचनात्" (जै. १–१–३०) इति सूत्रयामास । श्रुतिरप्याचष्टे—

"अजान्ह वै पृश्नींस्तपस्यमानान् ब्रह्म स्वयम्भ्वभ्यानर्षत्" इति । स्वयम्भु ब्रह्म वेदः, तपः कुर्वाणानृषीन् प्रति, अभ्यानर्षदाभिमुख्येनागच्छत्, मनसि प्रतिभातोऽभूदित्यर्थः । अत एव भगवान् यास्कोऽपि—"ऋषी गतौ" इति धातोः "ये गत्यर्थकास्ते ज्ञानार्थकाः" इति न्यायेन ऋषन्ति—जानन्ति अमुष्मात्कर्मण एवमर्थवता मन्त्रेण संयुक्तादमुना प्रकारेणैवं-लक्षणः फलविपरिणामो भवतीति ऋषयः इति । 'यस्य वाक्यं स ऋषिः' इति सर्वानुक्रमण्यां 'यस्य वाक्यं' इत्यत्र यद्दृष्टं वाक्यमित्यर्थोऽध्यवसेयः । (देवता—) अथ सर्वेषां मन्त्राणां तात्पर्येण प्रतिपाद्यमानोऽर्थो देवताशब्देनाभिधीयते । यत्काम ऋषिर्यस्या देवतायाः प्रसादेनाहममुष्यार्थस्य पतिर्भविष्यामीत्येवां बुद्धिं पुरोधाय मन्त्रेण स्तौति सा तन्मन्त्रस्य देवता भवति । यथाह भगवान् यास्कः—"यत्कामऋषिर्यस्यां देवतायामार्थपत्यमिच्छन् स्तुतिं प्रयुङ्क्ते, तद्दैवतः स मन्त्रो भवति" इति । देव एव देवता इति स्वार्थे तल्, देवतैव दैवतमिति स्वार्थेऽण्, दीव्यति प्रकाशत इति दैवतम्, अत एव तत्रभवता षड्गुरुणा सर्वानुक्रमणीभाष्ये "दानादिसर्वकल्याणगुणयोगी पचाद्यच्, देवः देवा तल-न्तात्स्वार्थेऽण् दैवत"मित्युक्तम् । (छन्दः—) छादयति वक्तारं पापात्कर्मण इति छन्दः । "छादयति ह वा एनं छन्दांसि पापात्कर्मणः" इति श्रुतेः । तथाऽन्यत्रापि—"यदेभिरात्मानमाच्छादयन् देवा मृत्योर्बिभ्यतः, तच्छन्दसां छन्दस्त्वम्" इति विज्ञायते ।

१९ मन्त्राणां त्रैविध्यम्—ते मन्त्राः पुनस्त्रिविधा ऋचः सामानि यजूंषि चेति । "तेषामृक् यत्रार्थवशेन पादव्यवस्था" (अ.२, पा १. अ.१०) इति जैमिनिसूत्रानुरोधेन पादव्यवस्थावन्मन्त्रत्वमृक्त्वम् । गीतित्वे सति मन्त्रत्वं सामत्वम् । एतदुभयभिन्नत्वे सति मन्त्रत्वं यजुष्ट्वम् ।

२० ऋचां त्रैविध्यम्—ता ऋचः पुनस्त्रिविधाः परोक्षकृताः, प्रत्यक्षकृताः, आध्यात्मिक्यश्चेति । तथाचोक्तं यास्केन—"तास्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृताः आध्यात्मिक्यश्चेति" । अयं च त्रैविध्येन विभागो ऋचां गूढार्थत्वेन । अनेन ऋग्विभागेनैव यजूंष्यपि विज्ञातानि भवन्ति । तत्र परोक्षकृतानां लक्षणं स एवाह—"तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते, प्रथमपुरुषैश्चाख्यातस्य" यासु परोक्षत्वेन सर्वनामभिः प्रथमपुरुषेण च निर्देशो भवति, ताः परोक्षकृताः । यथा—'इन्द्रो दिव इन्द्र ईशे पृथिव्याः' इत्यादौ । यासां सम्बोध्यमुद्दिश्य त्वमादिपदैर्निर्देशः क्रियते ताः प्रत्यक्षकृताः । यथा—"त्वमिन्द्रबलादधि, विन इन्द्र मृधो जहि" इत्यादौ । आत्मानमुद्दिश्य याः प्रवृत्ताः, ता आध्यात्मिक्यः । यथा—'अहं रुद्रेभिर्वसुभिश्चरामि' इत्यादौ । एतेषु च मन्त्रेषु खिलिकुन्तापवालखिल्यपरिशिष्टादयोऽन्तर्भवन्ति ।

२१ ब्राह्मणलक्षणम्—निरुक्तमन्त्रभिन्नवेदत्वम् ब्राह्मणत्वम् । आह च जैमिनिः—'शेषे ब्राह्मणशब्दः' (२–१–८–३२) इति ।

**२२ आरण्यकम्**—ब्राह्मणगत एव कश्चिद्भागोऽरण्येऽनूच्यमानत्वादारण्यकमित्याख्यायते। एतच्चारण्यकमनधीत्य न स्नातको भवतीति प्रशस्यते।

**२३ उपनिषदः**—'उप=नितरां सादयति=आपयति ब्रह्म' इत्युपनिषद्ब्रह्मविद्या। तत्प्रतिपादके वेदशिरोभागे उपनिषच्छब्द उपचर्यते। ताश्चोपनिषद ऐतरेयतैत्तिरीयबृहदारण्यकप्रभृतयः श्रूयन्ते।

**२४ अङ्गानि**—वेदात्प्रतीयमानोऽर्थः शिक्षाकल्पसूत्रादिभिः प्रतिनियतस्वरूपेण विज्ञायत इति वेदवाक्यजन्यशाब्दबोधोपकारकत्वात्तान्यङ्गपदव्यपदेशभाञ्जि भवन्ति। परम्परयोपयोगीनि मीमांसान्यायादीन्युपाङ्गपदेन व्यपदिश्यन्ते। तानि चाङ्गानि शिक्षाकल्पसूत्रव्याकरणनिरुक्तछन्दोज्योतिषाणीति षट्। स्वरव्यञ्जनाद्यभिव्यक्तिसाधनत्वेन **शिक्षा**, शाखान्तरीयगुणोपसंहारपूर्वकप्रयोगानुपूर्वीविज्ञानहेतुतया **कल्पसूत्राणि**, विभक्त्यादिपरिज्ञानजनकत्वेन **व्याकरणम्**, समुचितानां पर्यायशब्दानां प्रवृत्तिनिमित्तप्रकाशनपुरःसरं वैदिकशब्दव्युत्पत्तिग्रहहेतुतया **निरुक्तम्**, अक्षरकोशपादव्यवस्थालक्षणपरिज्ञाननिबंधनत्वेन **छन्दोविचितिः**, श्रुतिचोदितकर्मोपयोगिकालनिर्णयप्रयोजनत्वेन **ज्योतिषं** च वेदार्थविज्ञाने तदनुष्ठाने चोपकुर्वन्ति।

**२५ ब्राह्मणकल्पसूत्रविवेकः**—न च ब्राह्मणवाक्यैरेव प्रयोगपरिज्ञानस्य सम्भवेन कल्पसूत्राणामानर्थक्यमिति वाच्यम्, ब्राह्मणवाक्यानामर्थवादजटिलत्वेन विलम्बेन प्रयोगोपस्थापकत्वात् सर्वेषां प्रयोगानुपूर्वीज्ञानासम्भवाच्च। कल्पसूत्राणि तु शाखान्तरीयगुणोपसंहारपूर्वकं पौर्वापर्यविशिष्टप्रयोगबोधनायैव प्रवृत्तानीति झटित्यानुपूर्वीविशेषविशिष्टं प्रयोगविधिमुपस्थापयन्ति। कल्पानां सूत्राणां च सूक्ष्मं वैलक्षण्यं—यत् क्रतुप्रयोगं पाठमात्रेण स्पष्टं कल्पयन्ति ये बौधायनीयादयो ग्रन्थाः, ते **कल्पाः**। "ऋचं पादग्रहणे" (आश्व० श्रौ.सू., अ.१ ख.१) इत्यादि स्वकृतसंज्ञापरिभाषादिभिः प्रयोगस्य सूचकानि **सूत्राणि**—आश्वलायनीयादीनि। तानीमानि कल्पसूत्राणि भूयांसि श्रूयन्ते, तत्र साम्प्रतं प्रायेणोपलभ्यमानानि आश्वलायनापस्तम्बबौधायनसत्याषाढभारद्वाजकात्यायनवैखानसवाधूललाट्यायनद्राह्यायणसाङ्ख्यायनमानवकाठककौशिकानां सूत्राणि।

**२६ उपाङ्गानि**—( **स्मृतिः**—) स्मर्यते वेदधर्मोऽनेनेति स्मृतिः। करणे क्तिन्। अथवा वेदार्थानुभवजन्यं योगाभ्याससाध्यं वेदार्थविषयकं मन्वादीनां यत्स्मरणं सा स्मृतिः, तत्प्रयोज्यत्वाद्ग्रन्थेऽपि स्मृतिशब्दः। ताश्च स्मृतयो मनुयाज्ञवल्क्यपराशरप्रभृतिभिः प्रणीता बह्व्य इत्यन्यदेतत्। धर्मशास्त्रं स्मृतिरित्यनर्थान्तरम्। ( **इतिहासः**—) "इति ह पारम्पर्योपदेशोऽस्मिन्नास्ते" इतीतिहासः।

"धर्मार्थकाममोक्षाणामुपदेशसमन्वितम् ।
पूर्ववृत्तकथायुक्तमितिहासं प्रचक्षते" ॥ १ ॥

इत्युक्तलक्षणः पुरावृत्तप्रकाशको भारतादिर्ग्रन्थविशेषः । क्वचिद्वेदभागविशेषस्यैवेतिहासत्वमुक्तम् । यथाऽऽश्वलायनश्रौतसूत्रे "नवमेऽहनि तार्क्ष्यो वै वैपश्चितस्तस्य वयांसि विशस्तानीमान्यासत इति वयांसि ब्रह्मचारिणः इत्युपसमानीताः स्युस्तानुपदिशतीतिहासो वेदः सोऽयमितीतिहासमाचक्षीत" (उ. प. अ. ४. खं. ७) एवञ्च वेदभागानामितिहासत्वं पुरावृत्तप्रकाशकत्वादेव । ( पुराणम्—) पुराभवं पुराणम्—

"सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितं चैव पुराणं पञ्चलक्षणम्" ॥ १ ॥

इत्युक्तलक्षणो व्यासादिप्रणीतो ग्रन्थविशेषः पुराणम् । तच्च महापुराणोपपुराणभेदेन द्विविधम् । प्रत्येकमष्टादशविधं च । ( मीमांसा—) "मान पूजायाम्" इति धातोः सनश्चेच्छासाध्यविचारे लाक्षणिकत्वात्पूज्यविचारो मीमांसा । तत्प्रतिपादको ग्रन्थोऽपि मीमांसा । सा च द्विविधा पूर्वमीमांसोत्तरमीमांसा चेति । ( न्यायः—) प्रमाणैरर्थपरीक्षणं न्यायः । गौतमप्रणीतषोडशपदार्थनिरूपकं शास्त्रम् ।

२७ उपवेदाः—आयुर्वेदधनुर्वेदगान्धर्वार्थशास्त्राणि ऋगाद्यात्मकस्यैव वेदमहाराजस्यामात्यभूतान्युपवेदत्वेन व्यपदिश्यन्ते । एते चोपवेदाः सर्वेषामपि प्राणिनां व्यवहारान् साधिष्ठतममुपदिशन्ति । सर्वोऽप्ययं सर्वलोकशिवङ्करो महामहिमशाली विपुलतमः परिच्छेदो वेदसार्वभौमस्य राराजते भारतवर्षे इत्यहो भाग्यं भारतीयानाम् ! भूयांसो हि नव्यशिक्षिताः साम्प्रतं "भारते वर्षे भूचर( मोटर ) विमाननिर्माणप्रभृतयः कला नाभूवन् । पूर्वं प्राच्याश्च भारतीया भौतिकशास्त्रपाटवं नाध्यगच्छन्" इत्येवमादिकमुपालम्भवचनजातमुद्गिरन्ति । नूनमिदं विजृम्भितं भारतीयग्रन्थानभिज्ञतायाः । निशाम्यते हि 'अहहारेत्वा शूद्र' इति छान्दोग्योपनिषदि ( हारेत्वा हारैः सहितः इत्वा स्वयं गन्ता रथविशेषः ) जानश्रुतिं प्रति रैक्वनेनेदानीमिव, तैलविशेषपशुविशेषनिरपेक्षा एव इच्छामात्रगामिनो रथा आसन्निति सुस्पष्टम् । अत एवाश्वघोषादिकविभिर्गोश्रीसक्षया रथविशेषास्तत्र तत्रोपवर्णिताः । अर्थशास्त्रकाश्यपीयसंहितादिषु कलाः पुनरेवंविधाः समुल्लिखिता इत्याधुनिकैरेव वैज्ञैः समर्थितमित्यस्माभिरुपरम्यते ।

२८ वेदाभ्यासः तदधिकारिणश्च—अयं च साङ्गोपाङ्गो वेदोऽवश्याभ्यसनीयतयाऽनुशिष्यते "ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च" इति । वेदाभ्यासो हि पञ्चधा भवति—अध्ययनं, विचारः, अभ्यसनं, अध्यापनं, जप इति । गुरूच्चारणानूच्चारणमध्ययनं, मीमांसान्यायैरुपक्रमादिलिङ्गैश्च वेदतात्पर्यावधारणानुकूलो व्यापारो विचारः, गुरूच्चारणानूच्चरितस्यैवावर्तनमभ्यसनम्, शिष्येभ्यो दानमध्यापनम्, ब्रह्मयज्ञादौ पारायणं जपः।

भगवानपि जगौ—

'ब्राह्मणक्षत्रियविशां शूद्राणां च परंतप ।
कर्माणि प्रविभक्तानि स्वभावप्रभवैर्गुणैः' । इति ।

स्वाभाविकानेव गुणानवलम्ब्य कर्माणि प्रविभक्तानि, 'वसन्ते ब्राह्मणोऽग्नीनादधीत ग्रीष्मे राजन्यः, शरदि वैश्यः, वर्षासु रथकारः' इति । अत एव स्वभावप्रभवं गुणं तदनुरूपं च कर्म परीक्षितुं कश्चन विनिर्दिष्टो धार्मिकनिबन्धेषु **जीविकापरीक्षा**-नाम संस्कारः ।

३५ **चातुराश्रम्यादि**—अयं च स्वाभाविको गुणो यथा प्रकर्षं दार्ढ्यं चाप्नुयात् तथा केचनाचाराः कर्माणि च चोदितानि, ये वर्णधर्माः, आश्रमधर्माः, वर्णाश्रमधर्माः, गुणधर्माः, निमित्तधर्माः, साधारणधर्माश्चेति विभक्ताः स्मृतिकारैः । तत्र **वर्णधर्मो**ऽध्ययनादिः, **आश्रमधर्मः** समिदाधानादिः, **वर्णाश्रमधर्मः** पलाशो दण्ड इत्यादिः, **गुणधर्मो**ऽभिषेकादिगुणयुक्तस्य राज्ञो रक्षणादिः, **निमित्तधर्मः** प्रायश्चित्तादिः, **साधारणधर्मो**ऽहिंसादिः । तेषामेतेषां चानुशीलनेन सूक्ष्मतयात्मनि निगूढः स्वाभाविको गुणस्तत्परिपन्थिदोषापनयनेनाभिव्यज्यते । एषैव चित्तशुद्धिरित्याख्यायते । अपनीतदोषेण चित्तेन परिमृष्टेनादर्शतलेनेव शुद्धसच्चिदानन्दस्वरूप आत्मा विषयीक्रियते । तदेव हि ज्ञानं नाम । अत एवोक्तमभियुक्तैः—

"कषायपङ्क्तिः कर्माणि ज्ञानं तु परमा गतिः ।
कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते" ॥ इति ॥

३६ **पुरुषार्थसाधनम्**—पूर्वं शूद्रवैश्यक्षत्रियब्राह्मणानां स्वभावत एव कामार्थधर्ममोक्षाख्याः पुरुषार्थाः प्राधान्येनाभिलषणीया भवन्तीति प्रत्यपीपदाम । तांश्च तेषां पुरुषार्थान् सम्पादयितुं निखिलो वेदराशिरुपक्षीणः । तत्र "तरति शोकमात्मवित्, *ब्रह्मविद्ब्रह्मैव भवति, नैनं सेतुमहोरात्रे तरतः"* इत्यादिवचनैर्निरतिशयानन्दरूपं मोक्षाख्यं पुरुषार्थं प्रकृत्य "स आत्मा तत्त्वमसि श्वेतकेतो, अयमात्मा ब्रह्म, प्रज्ञानं ब्रह्म, अहं ब्रह्मास्मि, सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि वचोजातैः कूटस्थं सच्चिदानंदरूपं ब्रह्म बुबोधयिषुस्तद्बोधेनैवाविद्याकसकलदुःखोच्छेदं स्वमहिमप्रतिष्ठां च प्रतिपादयन् सर्वोपि श्रुतिशिरोभागो जागर्ति । पूर्वकाण्डश्चैहिकामुष्मिकफलप्रसवहेतूनि नैकविधानि कर्मजातानि विदधद्धर्माख्यं पुरुषार्थमभिदधानः सत्त्वशुद्धिप्रणाल्या मोक्षायैवोपकरोति । अर्थकामौ पुनर्यद्यपि श्रुत्या तात्पर्येण न प्रतिपिपादयिषितौ, तथाप्युत्तरवर्णपरिचरण—कृषि—वाणिज्य—भूमिजय—यजनाध्यापन—प्रतिग्रहादिकं चतुर्णां वर्णानामर्थाख्यपुरुषार्थसाधनं, सहधर्मचारिणीसंयोगादिसंस्कारान् कामसुखोपायांश्चाभिदधती श्रुतिरर्थकामसम्पादनेनापि पुरुषानुपकरोति । तत्रार्थकामयोः सूचिकामेकैकमृचं निदर्शनायोदाहरिष्यामः । यथा—

"अक्षैर्मा दीव्यः कृषिमित्कृषस्व वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः ॥"[1]
तां पूषञ्छिवतमामेरयस्व यस्यां बीजं मनुष्या३ वपन्ति ।
या न ऊरू उशती विश्रयाति यस्यामुशन्तः प्रहराम शेपम् ॥[2]

३७ विधिविचारः—व्याख्यातं मन्त्रब्राह्मणात्मके वेदे मन्त्राणां लक्षणं प्रयोजनं च । मन्त्रव्याख्यानरूपो ब्राह्मणभागः साम्प्रतं निरूप्यते । द्विविधं ब्राह्मणं विधिरर्थवादश्चेति । तथा च भगवानापस्तंबः "कर्मचोदना ब्राह्मणानि, ब्राह्मणशेषोऽर्थवादः" इति । विधिरपि द्विविधः—अप्रवृत्तप्रवर्तनोऽज्ञातज्ञापनश्चेति । "आग्नावैष्णवं पुरोडाशं निर्वपति दीक्षणीयायाम्" इत्याद्याः कर्मकाण्डगता विधयोऽप्रवृत्तप्रवर्तकाः । "आत्मा वा इदमेक एवाग्र आसीत्" इत्यादयो ज्ञानकाण्डगता विधयोऽज्ञातज्ञापकाः । तत्र ज्ञानकाण्डगतविधेरवांतरभेदाभावेन कर्मकाण्डगतविधेरेव त्रैविध्यं दर्शितम्—अपूर्वविधिः, नियमविधिः परिसङ्ख्याविधिश्चेति । तत्रात्यन्तमप्राप्तप्रापको विधिरपूर्वविधिः, यथा—"अग्निहोत्रं जुहोति" । पक्षे प्राप्तस्याप्राप्तांशपूरणफलको विधिर्नियमविधिः, यथा—"व्रीहीनवहन्ति" । अत्र नखविदलनादिरूपसाधनान्तरेणापि वैतुष्यसिद्धेः पक्षेऽप्राप्तमवहननं नियम्यतेऽदृष्टार्थम् । युगपदुभयप्राप्तावेकतरविधाने अन्यस्य व्यावृत्तिः परिसंख्याविधिः, यथा—"पञ्च पञ्चनखा भक्ष्याः" इत्यत्र रागतः पञ्चनखापञ्चनखानामुभयेषां युगपद्भक्षणप्राप्तौ पञ्चैव पञ्चनखा भक्ष्याः इति पञ्चेतरपञ्चनखभक्षणव्यावृत्तिः क्रियते । एष परिसंख्याविधिः । प्रकारान्तरेण चायं विधिश्चतुर्धा भवितुमर्हति—उत्पत्तिविधिः, विनियोगविधिः, अधिकारविधिः, प्रयोगविधिश्चेति । कर्मस्वरूपमात्रबोधको विधिः प्रथमः, यथा—"अग्निहोत्रं जुहोति" इत्यादिः । उत्पन्नस्य विनियोगाकाङ्क्षायां गुणसम्बन्धबोधको विधिर्विनियोगविधिः, यथा—"दध्ना जुहोति" इत्यादिः । फलस्वाम्यबोधकविधिरधिकारविधिः, यथा—"अग्निहोत्रं जुहुयात्स्वर्गकामः" इत्यादिः । अंगप्रधानाद्यानुपूर्वीबोधको विधिः प्रयोगविधिः, यथा—"प्रयाजादिभिरुपकृत्याग्नेयादिभिरपूर्वं भावयेत्" इत्यादिः ।

---

१ ऋ. सं १०-७-८-५-१३ ।

हे कितव ! बहुमन्यमानो मद्वचने विश्वासं कुर्वन् त्वमक्षैर्मा दीव्यो द्यूतं मा कुरु । कृषिमित् कृषिमेव कृषस्व कुरु । वित्ते कृष्या सम्पादिते धने रमस्व रतिं कुरु । तत्र कृष्यां गावो भवन्ति तत्र जाया भवति तदेव धर्मरहस्यं श्रुतिस्मृतिकर्ता सविता सर्वस्य प्रेरकोऽयं दृष्टिगोचरोऽर्य ईश्वरो मे मह्यं विचष्टे विविधमाख्यातवान् ॥

२ ऋ. स. १०-८-३-२७-३७ ।                —सायणभाष्यम् ।

हे पूषन् पोषक एतन्नामकदेव शिवतमां अत्यन्तमङ्गलभूतां तां आ एरयस्व सर्वतः प्रेरय । यस्यां ऊर्वौ बीजं रेतोलक्षणं मनुष्या वपन्ति आदधते । या नोऽस्माकं ऊरू उशती कामयमाना विश्रयाते, यस्यामूरौ उशन्तः कामयमानाः वयं शेपं स्पर्शनयोग्यं पुंप्रजननं प्रहराम ऊरौ व्यञ्जनसम्बन्धं करवामेत्यर्थः ॥

—सायणभाष्यम् ।

सोऽयं पञ्चविधोऽभ्यासो द्विजेष्वेव व्यवतिष्ठते, अध्ययनपूर्वकत्वादितरेषां चतुर्णामभ्यासानाम्। अध्ययनस्योपनयनपूर्वकत्वात्, उपनयनविधेश्च त्रैवर्णिकेष्वेव पर्यवसितत्वात्। अर्थादेव पञ्चविधाभ्यासे निवृत्तिः शूद्राणाम्। 'ब्राह्मणेन निष्कारणः षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति श्रुतौ ब्राह्मणपदं क्षत्रियवैश्ययोरुपलक्षकम्। यथा—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति' 'ब्राह्मणस्य [illegible] सोमविद्याप्रजम्' इत्यादौ। केचित्तु ब्राह्मणपदं नोपलक्षकं, ब्राह्मणस्यैवाधिकारो वेदाध्ययनादौ, मुख्यार्थानुरोधात्, उपलक्षणत्वेऽजहत्स्वार्थलक्षणाश्रयणापत्तेः। अत एव 'विद्या ह वै ब्राह्मणमाजगाम' इति निरुक्तोदाहृतवचने ब्राह्मणपदमात्रस्येनोपपद्यत इत्याहुः। तच्चिन्त्यम्—क्षत्रियवैश्ययोरप्युपनयनानुशासनात्, 'उपनयीत' 'तमध्यापयीत' इति श्रुतेरध्ययनस्यार्थप्राप्तत्वाद्ब्राह्मणपदमुपलक्षकमेव। 'विद्या ह वै ब्राह्मणमाजगाम' इत्यत्र तु 'न मां ब्रूयाः' इत्यनेनाध्यापनस्यैवानुशिष्टत्वेनाध्यापने ब्राह्मणस्यैवाधिकारः, अध्ययने पुनस्त्रैवर्णिकानामेवेति स्वरसतः प्रतीयते।

## ( ४ ) वेदप्रमेयम्।

२९ स्वभावत इष्टफलानामुपायनिरूपणम्—आदित एव सर्वेषां प्राणिनां स्वरूपमुपलभामः, यत्सर्वेऽपि सुखमेव कामयन्त इति। तस्यैव च सुखस्य साधनमुपदिश्य तेन तान् संयोजयितुं प्रवृत्ते भगवानाम्नायः। यथा—'ज्योतिष्टोमेन स्वर्गकामो यजेत' 'अग्निहोत्रं जुहुयात्स्वर्गकामः' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवमादिभिर्वचनैः सुखविशेषस्वर्गसाधनत्वं ज्योतिष्टोमादिषूपायेष्वाचष्टे प्रवर्तयति चेष्टसाधनताद्वारेण श्रेयःसाधनेषु कर्मसु। स्वर्गो हि नाम—

> 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।
> अभिलाषोपनतं यच्च तत्सुखं स्वःपदास्पदम्' ॥ १ ॥

इत्यादिवचनैः सुखात्मक एवाङ्गीक्रियते मीमांसकैः।

३० प्रतिपत्तिसमाधानम्—पूर्वोक्तद्विविधप्रतिपत्तिमन्तमधिकारिणमुपलभ्योभयीमपि प्रतिपत्तिं समाधित्सुर्भगवानाम्नायः सर्वज्ञकल्पः समास्प्रवर्तते। सम्यग्दर्शने वा तदनुकूले कर्तव्यानुष्ठाने वा भ्रमप्रमादादिपुरुषदोषविनाकृतं वेदमपहाय नान्यत्प्रमाणं समामनन्ति कृतधिषणा विद्वांसः। अत एव च श्रूयते भगवती श्रुतिर्द्विविधा, कर्तव्यं परिबोधयन्ती कर्मकाण्डरूपेण, सम्यग्दर्शनं च सम्पादयन्ती ज्ञानकाण्डरूपेण। अत एव च काण्डद्वयं विवृण्वानौ भगवन्तौ व्यासजैमिनी कर्ममीमांसां ब्रह्ममीमांसां च प्राणैषाम्। आभ्यां हि न्यायतः साध्यमानो वेदार्थः पुरुषाणां हिततमं साधयिष्यति, नान्योऽतः कश्चिदप्यासतम इत्येष निश्चयोऽर्थः सर्वेषां वैदिकानाम्।

३१ श्रेयःप्रेयसोर्विवेकः—एवं स्वभावत एव श्रेयसि वर्तमानान् पुरुषानुपलभ्य

---

भाट्टदीपिका—अ. ४. पा. ३. अ. ११. ग्रन्थान्तरे—"अभिलाषोपनीतं च" इति पाठान्तरमुपलभ्यते।

गुडजिह्विकान्यायेन काम्यकर्माण्यभिदधाना श्रुतिस्तात्पर्येण श्रेयस्साधनान्येव कर्माणि ब्रुवाणा तत्रैव दयया प्रवर्तयति । स्वयमेव चैतदाचष्टे श्रुतिः—

"अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषꣳ सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति हीयतेऽर्थाद्य उ प्रेयो वृणीते ॥"

( इति कठोपनिषत् १।२।१ )

३२ एषणात्रयानुवादः—एवं स्वभावसिद्धं पूर्वोक्तमेषणात्रयमनूद्य मंदाधिकारिणां कृते 'पुत्रकामः पुत्रेष्ट्या यजेत' 'चित्रया यजेत पशुकामः' 'स्वाराज्यकामो राजसूयेन यजेत' 'क्षेत्रपत्यं चरुं निर्वपेदन्नताममागतेयं वै क्षेत्रस्य पतिस्स्वामेव प्रतितिष्ठति' तै० सं० (२।२।१) 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' 'सायुज्यकामौ राजपुरोहितौ यजेयाताम्' इत्यैहिकामुष्मिकफलसाधनानि कर्माणि विदधाति श्रुतिः ।

३३ ऋणत्रयपरिहारः—विवेचितपूर्वसहजप्राप्तमृणत्रयमनूद्य तत्परिहारोपायांश्चानुशास्ति शास्त्रम् । "जायमानो ह वै ब्राह्मणस्त्रिभिर्ऋणवा जायते, ब्रह्मचर्येण ऋषिभ्यो, यज्ञेन देवेभ्यः, प्रजया पितृभ्यः" इति । तथा—'पुरुषे ह वा अयमादितो गर्भो भवति यदेतद्रेतस्तदेतत्सर्वेभ्योऽङ्गेभ्यस्तेजः सम्भूतमात्मन्येवात्मानं बिभर्ति तद्यदा स्त्रियां सिञ्चति, अथैतज्जनयति तदस्य प्रथमं जन्म तत्स्त्रिया आत्मभूयं गच्छति यथा स्वमङ्गम्' 'स यत्कुमारं जन्मनोऽग्रेऽधिभावयति आत्मानमेव तद्भावयति एषां लोकानां सन्तत्या एवं सन्तता हीमे लोकाः' (ऐ०आ०२–५–१ ) नित्यस्य रायः पतयः स्याम, प्रजया हि मनुष्यः पूर्णः, ऋतौ भार्यामुपेयात्, स्वाध्यायोऽध्येतव्यः, स्वाध्यायमधीयीत, स्वाध्यायान्न प्रमदितव्यम्, स्वाध्यायान्मा प्रमदः, आचार्याधीनो वेदमधीष्व, सायंप्रातर्भिक्षेथाः, स यत्सर्वमेकुर्यादिक्षयाद्यात्मानम् स कामेभ्यो नालं स्यात्, स यत्सर्वं नेति ब्रूयात्, पापिकास्य कीर्तिर्जायेत सैनं तत्रैव हन्यात्' ( ऐ० आ० २।३।६ ) इति, 'सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः' 'सहजं कर्म कौन्तेय' 'एवं परंपराप्राप्तम्' इत्यादिना । तस्यैतस्य ऋणत्रयस्य परिहाराय स्वाध्यायाध्ययनं, देवतोद्देशेन द्रव्यत्यागरूपो यज्ञः, प्रजोत्पादनं चेत्युपाया विधीयन्ते ।

३४ चातुर्वर्ण्योम्नानम्—यदुपवर्णितम् पूर्वं स्वाभाविकगुणानुरोधेन चातुर्वर्ण्यम्, तदेतद्भगवति वेदे समाम्नायते "ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥" 'ब्रह्मसन्धत्तं तन्मे जिन्वतम्' 'यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः' 'ब्रह्मवर्चसकामो ब्राह्मणो बृहस्पतिसवेन यजेत' 'स्वाराज्यकामो राजा राजसूयेन यजेत' 'वैश्यो वैश्यस्तोमेन यजेत' 'शूद्रो मनुष्याणामश्वः पशूनाम्' ( तै० सं० ७।१।१ ) 'तदेतद्ब्रह्मक्षत्रं विट्शूद्रस्तदग्निनैव देवेषु ब्रह्माभवत् ब्राह्मणो मनुष्येषु क्षत्रियेण क्षत्रियो वैश्येन वैश्यः शूद्रेण शूद्रः' ( श० ब्रा० १४–२–४–२–२७ ) इत्यादिना ।

३८ अर्थवादः—अयं च विधिरर्थवादजनितप्राशस्त्यज्ञानसहकारेणाधिकारिणं विधेये प्रवर्तयतीत्यर्थवादवाक्यानामपि विधेयस्तावकत्वेन प्रामाण्यं समर्थितं पूर्वतन्त्रे । अर्थवादः पुनरयं त्रिविधः—

"विरोधे गुणवादः स्यादनुवादोऽवधारणे ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः" ॥ इति ॥

मानान्तरविरोधे गुणवादः, यथा—"ग्रावाणः प्लवन्ते" इत्यादिः । मानान्तरावधारितेऽर्थेऽनुवादः, यथा—"अग्निर्हिमस्य भेषजम्" इत्यादिः । मानान्तरानवधृतं तदविरुद्धार्थं ब्रुवन् भूतार्थवादः, यथा—"देवासुराः संयत्ता आसन्" इत्यादिः ।

३९ अपूर्वविचारः—वेदवाक्यैर्विधीयमानस्य यागादेः "सोमेन, दर्शपूर्णमासाभ्याम्" इत्यादितृतीयाश्रुत्या स्वर्गादिसाधनत्वं प्रतीयते । तच्च साधनत्वं कार्याव्यवहितप्राक्क्षणवृत्तित्वम् । आशुतरविनाशिनो यागादेर्देहपातादूर्ध्वं मेरुपृष्ठादिप्रदेशेऽनुभविष्यमाणं स्वर्गादिकं प्रत्यव्यवहितपूर्ववृत्तित्वं तावदनुपपन्नम्, अव्यवहितपूर्ववृत्तित्वाभावे च साधनत्वं न सङ्घटीति, अन्यथा मृताभ्यामपि दम्पतीभ्यां पुत्रोत्पत्त्यापत्तेः, अतोऽवश्यं यागादिजन्यस्वर्गादिजनकं किमप्यपूर्वं नाम द्वारं कल्पनीयम् । न च कल्पितेऽप्यपूर्वे तस्यैव स्वर्गसाधनत्वसम्भवे यागस्य स्वर्गसाधनत्वश्रुतिरुपरुध्येतेति शङ्क्यम् । यागस्यावान्तरव्यापारो ह्यपूर्वमिति कल्प्यते । तज्जन्यत्वे सति तज्जन्यजनकत्वं हि व्यापारलक्षणम्, कार्याव्यवहितप्राक्क्षणवृत्तिसत्त्वव्यापारान्यतरवत्त्वरूपकारणत्वाभ्युपगमात् न यागस्य स्वर्गसाधनत्वश्रुतेर्व्याकोपः । न ह्युद्यमननिपतनयोरवान्तरव्यापारयोः सत्त्वे कुठारस्य छिदासाधनत्वमपैति । यदि व्यापारवतो यागस्य नाशे व्यापारोऽपि नश्येदिति कुठारदृष्टान्तेनापद्येत, तदा यागजन्या काचिच्छक्तिरपूर्वमस्तु, शक्तिव्यवधानेऽपि यागस्य साधनत्वं न विरुध्यते, औष्ण्यव्यवहितेऽप्यग्नौ दाहकत्वं दृश्यते । यथाऽङ्गारजन्यमौष्ण्यं शान्तेष्वप्यङ्गारेषु जलेऽनुवर्तते, तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्तर्यात्मन्यनुवर्तिष्यत इति साधु श्लिष्यते । तस्मात्सिद्धं मीमांसकाभिमतं फलप्रापकमपूर्वमिति ।

४० अपूर्वाणामनेकत्वम्—श्रुत्याधिकारविधौ कर्मणः फलसाधनता बोध्यते 'यागेन स्वर्गं भावयेत्' इति । कथं विनश्वरेण यागेन भावयेदित्याकाङ्क्षायां 'अपूर्वं कृत्वे'ति समाधीयते । कथमपूर्वं क्रियेतेति पुनरपेक्षायां यागानुष्ठानप्रकारेणेति । तच्चापूर्वं दर्शपूर्णमासयोरनेकविधम्—फलापूर्वं, समुदायापूर्वं, उत्पत्त्यपूर्वं, अङ्गापूर्वं चेति । येन स्वर्ग आरभ्यते तत्फलापूर्वम् । अमावास्यायामाग्नेयादीनां त्रयाणां यागानामेकः समुदायः, पौर्णमास्यामपर इति तयोर्भिन्नकालयोः संहत्य फलापूर्वारम्भकत्वायोगात्तदारम्भाय समुदायद्वयजन्यमपूर्वद्वयं कल्प्यते, तत्समुदायापूर्वम् । तादृशसमुदायापूर्वनिर्वहणाय समुदायघटकानां त्रयाणां यागानां भिन्नक्षणवर्तित्वेन संहननासम्भवात्, आग्नेयाग्नीषोमीयोपांशुयाजयागैः प्रत्येकं त्रीण्यपूर्वा-

ण्युत्पद्यन्ते । एवं दर्शे आग्नेयादियागत्रयेण पृथगुत्पत्त्यपूर्वाण्युत्पद्यन्ते इति कल्प्यते, तेषां चापूर्वाणामङ्गोपकारमन्तरेणानिष्पत्तेः, अनेकक्षणवर्तिनां चाङ्गानां सङ्घातासम्भवेन तत्तदङ्गजन्यान्यनेकान्यपूर्वाणि कल्प्यन्ते, तानि चाङ्गापूर्वपदेन व्यपदिश्यन्ते । एषाऽपूर्वप्रक्रिया "चोदनापुनरारम्भः"[1] इत्यधिकरणे भेदलक्षणे तदन्यमीमांसाग्रन्थेषु साकल्येन समाकलनीया, सुधीभिः ।

**४१ क्रत्वर्थविचारः**—एवंविधापूर्वसाधनानि यानि कर्माणि विधीयन्ते वेदे, तेषु कानिचित्पुरुषार्थानि कानिचित्क्रत्वर्थानि । "यस्मिन् प्रीतिः पुरुषस्य तस्य लिप्साऽर्थलक्षणाविभक्तत्वात्"[2] इति सूत्रेण शास्त्रानपेक्षेच्छाविषयभाव्यकभावनांशकत्वं पुरुषार्थस्य लक्षणम् । क्रत्वर्थो हि शास्त्रादेव गम्यते, यस्मिन् कृते पुरुषस्य प्रीतिर्भवति स पुरुषार्थः इति तयोः स्वरूपे । पुरुषार्थभिन्नत्वं क्रत्वर्थलक्षणं, क्रत्वर्थो हि क्रतुमुपकरोति, उपकारश्च साद्गुण्यसम्पादनम् । पुरुषार्थस्तु क्रतुप्रवेशमन्तराऽपि पुरुषमुपकरोति, पुरुषोपकारश्च साक्षात्–अदृष्टद्वारा वा पुरुषप्रीतिसम्पादनम् । दर्शपूर्णमासादयो गोदोहनादयश्च पुरुषार्थाः । न हि दर्शपूर्णमासाभ्यां कस्यचित्क्रतोरुपकारः सम्पद्यते, तयोरेव क्रतुत्वात्, नापि गोदोहनं क्रतूपकारकम्, तदभावेऽपि चमसेन क्रतूपकारासिद्धेः । किंतु दर्शपूर्णमासाभ्यां स्वर्गस्य, गोदोहनेन पशूनां च सम्पादनात्पुरुषप्रीतिसिद्धिः । प्रयाजादयस्तु क्रत्वर्थाः, न हि प्रयाजादिभिः पुरुषस्य कश्चित्प्रीतिविशेष उत्पद्यते येनैते पुरुषार्था भवेयुः । किंतु दर्शपूर्णमासरूपक्रतुजन्यापूर्वसाधकतया क्रतोरेवोपकारकाः । अन्यानि पुनः कानिचित्पुरुषार्थानि च क्रत्वर्थानि च भवन्ति, यथा–अनृतवदननिषेधः । पुरुषेणोच्यमानमनृतं प्रत्यवायमापादयति । दर्शपूर्णमाससंयुक्तेन पुरुषेण चोच्यमानमनृतं क्रतोरपि वैगुण्यमापादयति, पुरुषमपि प्रत्यवायभाजं करोति । एतं च क्रत्वर्थपुरुषार्थयोर्विवेकं विज्ञायानुष्ठितानि कर्माणि श्रेयो जनयन्तीति भगवाञ्जैमिनिः प्रयुक्तिलक्षणे आदित एव निर्णिनाय "अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा"[3] इत्यादिना ।

**४२ अङ्गविचारः**—एवंविधैश्च क्रतुभिः पूर्वोक्तापूर्वे जननीये यानि पुनः साक्षात्परम्परया वा सहकारीणि भवन्ति तान्यङ्गानीत्याचक्षते मीमांसकाः । अङ्गत्वं च परोद्देशप्रवृत्तपुरुषकृतिव्याप्यत्वम् । परः स्वर्गादिः, तदुद्देशेनाग्नेयादियागादौ यः प्रवृत्तः पुरुषः तत्कृतिविषयत्वमङ्गानामस्तीति लक्षणसङ्गतिः । न चैवं प्रधानेष्वतिव्याप्तमिति शङ्क्यम्, अफलत्वेन विशेषणीयत्वात् । प्रधानानि हि फलवन्ति, तत्सन्निधौ पठितानामफलानामेव ह्यङ्गत्वम् । "फलवत्सन्निधावफलं तदङ्गम्" इति हि न्यायः । न च प्रयाजाद्यङ्गानामपि "वर्म वा एतद्यज्ञस्य क्रियते, यत्प्रयाजानूयाजा इज्यन्ते, वर्म यजमानस्य भ्रातृव्याभिभूत्यै, यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते" इत्यादिना फलसम्बन्धबोधनात्कथमेषामङ्गत्वम् इति वाच्यम्,

१ जै. सू. २-१-५। २ जै. सू. ४-१-२। ३ जै. सू. ४-१-१।
४ भूमिका.

"द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्यात्" इत्यधिकरणे क्रत्वर्थानां क्रतुनिष्पादनव्यतिरेकेण फलाकाङ्क्षाया अभावात्फलस्य कल्पयितुमशक्यत्वेन फलश्रवणमर्थवाद एवेति सिद्धान्तितत्वात्। स्पष्टं चैतत्—"शेषः परार्थत्वात्" इति सूत्रे शेषलक्षणे। वस्तुतस्तु—प्रधानभूतयागादेरपि फलं प्रत्यङ्गत्वादिष्टमेव तत्र लक्षणगमनम्। तथा च सूत्रम्—"कर्माण्यपि जैमिनिः फलार्थत्वात्" इति।

४३ अङ्गद्वैविध्यम्—तानि पुनरङ्गानि द्विविधानि—आरादुपकारकाणि, सन्निपत्योपकारकाणि चेति। प्रधानजन्यापूर्वसहकारीण्यङ्गान्यारादुपकारकाणि, यथा—दर्शपूर्णमासयोराघारप्रयाजाज्यभागादीनि, पार्वणहोमनारिष्ठहोमानूयाजपत्नीसंयाजादीनि च। साक्षात्परम्परया वा कर्मस्वरूपनिष्पादकानि संनिपत्योपकारकाणि निर्वापप्रोक्षणपरावपनाधिवपनपेषणादीनि। अङ्गत्वबोधकानि प्रमाणानि श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यारूपाणि षट्, तानि चोत्तरोत्तरं दुर्बलानि पूर्वपूर्वं प्रबलानीति विस्तरोऽन्यत्र ज्ञेयः।

४४ कर्मैकत्वम्—वेदे भूयस्यः शाखा भिन्नाः। तत्र तत्र चोद्यमानान्यग्निहोत्रादिकर्माणि किं भिद्यन्ते, उत सर्वशाखास्वेकमेव? इति विचारे शब्दान्तराभ्यासगुणादिभिरतत्तच्छाखागतानि कर्माणि भिद्यन्त इत्युदितां शङ्कां परिहरत्याचार्यो भगवाञ्जैमिनिर्भेदलक्षणे "एकं वा संयोगरूपचोदनाख्याविशेषात्" इत्यादिना। ततश्च कर्मण एकत्वे सिद्धे "स्वाध्यायोऽध्येतव्यः" इत्यनेन स्वपितृपितामहादिपरम्पराप्राप्तशाखाया एवाध्येयतया तत्तच्छाखागतविधीनां तत्तदध्यायिपुरुषान् प्रत्यज्ञातज्ञापकत्वेनार्थवत्त्वात्स्वशाखागतकर्मानुष्ठानेनैव पुरुषार्थसिद्धिर्निष्प्रत्यूहा।

४५ प्रकृतिविकृतिविवेकः—तानि कर्माणि कानिचित्प्रकृतिभूतानि। कानिचिद्विकृतिभूतानि। यत्र समग्राङ्गाम्नानं सा प्रकृतिः, विशेषाङ्गोपदेशो यत्र सा विकृतिः। अङ्गान्तराणि तु प्रकृतेरतिदिश्यन्ते। सा प्रकृतिस्त्रिविधा—अग्निहोत्रम्, इष्टिः, सोमश्चेति। त्रिष्वप्येतेष्वन्यनैरपेक्ष्येण साङ्गजातमुपदिष्टम्। अग्निहोत्रं होमानां प्रकृतिः, इष्टिः सर्वासां सौर्यादिकाम्येष्टीनां दीक्षणीयादिसोमाङ्गेष्टीनां च प्रकृतिः, सोमस्त्वग्निष्टोमसंस्थाकज्योतिष्टोमाख्यः सर्वासामुत्तरासां संस्थानां प्रकृतिः। तत्राग्नीषोमीयपशुयागः सोमाङ्गभूतः साक्षात्पशुप्रभवद्रव्यकत्वाद्दर्शेष्टि—सांनाय्ययागविकृतिभूतोऽन्येषां सवनीयप्रभृतीनां सर्वपाशुकानां प्रकृतिः। 'प्रकृतिवद्विकृतिः कर्तव्या' इति न्यायः। गृह्येऽपि गृह्यपरिचरणम्, पार्वणस्थालीपाकः, पार्वणमित्यादीनि होमेष्टिपिण्डपितृयज्ञादिप्रकृतिकानीति विभावनीयम्।

४६ नित्यनैमित्तिकादिविचारः—एतानि श्रुतिविहितानि कर्माणि प्रकारान्तरेण चातुर्विध्यमापद्यन्ते—नित्यानि, नैमित्तिकानि, काम्यानि, प्रतिषिद्धानि चेति। "यावज्जीवमग्निहोत्रं जुहोति, यावज्जीवं दर्शपूर्णमासाभ्यां यजेत, अहरहः सन्ध्यामुपासीत" इत्यादिवाक्यविहितानि नित्यानि। नित्यत्वं चाकरणे प्रत्यवायजनकत्वम्। "यस्याहिताग्नेरग्निर्गृहान् दहेत्सोऽ-

१ जै. सू. ४-३-१। २ जै. सू. ३-१-२। ३ जै. सू. ३-१-४। ४ जै. सू. २-४-९।

मयें क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्, प्रस्ते स्नायात्, वैश्वानरं द्वादशकपालं निर्वपे-त्पुत्रे जाते" इत्यादिवाक्यविहितानि नैमित्तिकानि, गृहदाहमरणपुत्रजननादिनिमित्तेषु तेषां विधानात् । यद्यपि नैमित्तिकानामप्यकरणे प्रत्यवायापादकत्वस्याविशेषेण नित्यत्वं प्रसज्यत एव, तथापि जीवनादिनियतनिमित्तकानि नित्यानि, गृहदाहाद्याकस्मिकनिमित्तकानि नैमित्तिकानीति तयोर्विवेकः । "चित्रया यजेत पशुकामः, सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः, वृष्टिकामः कारीर्या यजेत" इत्यादिवाक्यविहितानि काम्यानि, तत्तत्फलोद्देशेन विहितत्वात् । "तस्मान्मलवद्वाससा न संवदेत न सहासीत न तस्याअन्नमद्यात्, न सुरां पिबेत्, न कलञ्जं भक्षयेत्" इत्यादीनि निषिद्धानि । तत्र काम्यनिषिद्धवर्जनपुरःसरं नित्यनैमित्तिकानुष्ठानेनानुषङ्गिकं स्वर्गादिफलं सत्त्वशुद्धिद्वारा विविदिषोत्पादनपुरःसरं ब्रह्मज्ञानमपि समासाद्यत इति सिद्धान्तः कृतधियाम् । तत्र काम्ये कर्मणि सर्वाङ्गान्युपसंहर्तव्यानि, अङ्गवैकल्येनानुष्ठीयमानं काम्यं कर्म न जातु फलं प्रसोष्यति । नित्येषु तु यदा यावन्त्यङ्गानि शक्नोत्युपसंहर्तुं तदा तावद्भिरुपेतं प्रधानं कुर्वन्नपि फलाय कल्पते ।

४७ गौणमुख्यविचारः—एवं श्रुत्युक्तेषु कर्मसु प्रधानं याऽङ्गं वा यन्मुख्यतया श्रूयते, तदेव च महता प्रयत्नेनानुष्ठेयम् । सर्वथा तदलाभे शास्त्रोक्ताः प्रतिनिधयः समाहर्तव्याः । ते च मुख्यसुसदृशा एव, तथापि सुसदृशलाभे मन्दसदृशं नोपादेयम् । वैकल्पिकयोर्मुख्ययोरेकेन प्रक्रान्ते प्रयोगे यदि तस्यापचारो भवति, तदा वैकल्पिकं मुख्यान्तरं नोपादेयम्, किन्तु प्रक्रान्तपूर्वद्रव्यस्य सुसदृशमेव वस्तु प्रतिनिधातव्यम् । क्वचित्सुसदृशवस्त्वसम्भवेऽपि वचनबलादसदृशमपि प्रतिनिधीयते, यथा "यदि सोमं न विन्देत पूतीकानभिषुणुयात्" इति । स्पष्टं चैतत्सर्वमधिकारलक्षणे भाट्टयां मीमांसायाम् ।

४८ कर्माधिकारनिर्णयः—अस्मिन्न वैदिके कर्मणि त्रैवर्णिकस्यैवाधिकारो न शूद्रस्य, श्रौतस्य चाग्निसाध्यत्वात्, अग्न्याधानसम्पाद्यत्वेनाधानस्य "वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः" इति त्रयाणामेवानुद्दिष्टत्वेन शूद्रस्याधानाभावात् । कर्मणोऽर्थज्ञानसाध्यत्वेनार्थज्ञानस्य चाध्ययनसम्पाद्यत्वात्, अध्ययनस्य चोपनीताधिकृतत्वात्, उपनयनस्य च "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यम्" इति त्रैवर्णिकानामेवानुशिष्टत्वाच्छूद्रोऽधिक्रियतेऽध्ययनादाविति साधितमेतत्पुरस्तात् । "पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति वचनात्तस्य समीपेऽपि नाध्येतव्यं, स कथं स्वयमश्रुतं शूद्रो वेदमधीयीत । न च स्वाध्यायविधिना शूद्रस्याध्ययनेऽनधिकारेऽपि "स्वर्गकामो यजेत" इत्यविशेषेण चातुर्वर्ण्ये प्रवृत्तो विधिः स्वर्गकामस्य शूद्रस्याप्यर्थज्ञानमाक्षिपतु, तदर्थं चाविहितेनाध्ययनेन वोपायान्तरेण वा विद्यां लब्ध्वाऽधिक्रियतां कर्मणि शूद्रः इति वाच्यम्, क्रतुविधयो ह्यन्यथाऽनुपपत्त्या विद्यार्जनमाक्षिपन्ति, यदा ॥ स्वाध्या-

"मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।
नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥"
(ऋ० सं० ८।६।२३।१)

इत्यवदाने (३)

"धन्वन्निव प्रपा असि"

इति प्रपाप्रवर्तने (४)

"आयाहीन्द्र पथिभिरीळितेभिर्यज्ञमिमं नो भागधेयं जुषस्व ।
तृप्तां जहुर्मातुलस्येव योषा भागस्ते पैतृष्वसेयी वपामिव ॥"

इति मातुलकन्यापरिणये (५)

५१ मीमांसाशास्त्रम्—भगवत्या श्रुत्या यागादीनां स्वर्गादिसाधनत्वे प्रमीयमाणे कथं यागोऽनुष्ठेयः, कानि च तदङ्गानि, किमत्र प्रधानम्, कर्मणः प्रयोजनं किम्, कश्चात्राधिकारी, कथमूहः कार्यः, क्व वा बाधोऽनुसरणीयः, इत्यादयः शङ्काः समुत्पद्यमानाः प्रतिबध्नन्ति वैदिकस्य कर्मणोऽनुष्ठानमिति सर्वथा महतीयमनर्थपरम्परा कर्मानुतिष्ठासून् तत्फलं च प्रेप्सून् वैदिकानहर्निशं बाधत इति निपुणं निभालयन् भगवान् सर्वतन्त्रस्वतन्त्रः सर्वज्ञशिखामणिर्जैमिनिराचार्यश्चतुरध्यायात्मकेन सङ्कर्षकाण्डेन समं द्वादशलक्षणीं धर्ममीमांसां प्रणिनाय । तत्र नैकविधान्विषयान् प्राप्तपूर्वपक्षप्रत्याख्यानपुरःसरं तैस्तैरनितरबुद्धिसाधारणैर्न्यायजालैर्निर्णीय दयारसपरंवदश्चिराय स्वस्यधमर्णयांचकार वैदिकवर्गम् । धर्ममीमांसा, कर्ममीमांसा, अध्वरमीमांसा, पूर्वमीमांसा, पूर्वतन्त्रमित्येतदस्य शास्त्रस्यानर्थान्तरम्[२]। अत्र हि षोडशाध्यायाः । तत्रादिमेषु द्वादशस्वध्यायेषु निर्णीतानेव विषयान् क्रमशो मन्दमतीनां दुरवधारोहायेतस्ततो विप्रकीर्णान् पुनश्चतुर्लक्षण्या विमर्शयाम्बभूव । स एष चतुरध्यायात्मको ग्रन्थः सङ्कर्षकाण्डमित्याख्यायते । तत्र प्रथमं द्वादशाध्यायेषु यथासङ्ख्यं प्रमाण, भेदः, शेषत्वं, प्रयुक्तिः, क्रमः, अधिकारः, सामान्यातिदेशः, विशेषातिदेशः, ऊहः, बाधः, तन्त्रं, प्रसङ्गश्चेति द्वादश पदार्थाः

धन्व ऋच्छन्त इत्यर्थः । तासां मर्यादानां एकामित् एकामेव अहुरः पापवान् पुरुषः अभिगात् अभिगच्छति । यस्त्वेव करोति स पापवान् भवतीत्यर्थः । किंच आयोः तस्य मनुष्यस्य स्कम्भ स्कम्भयिता निरोधकोऽग्निः उपमस्य समीपभूतस्य आयोर्नीळे स्थाने पथां आदित्यरूपस्य स्वस्य रश्मीनां विसर्गे विसर्जनस्थानेऽन्तरिक्षमध्ये वर्तमाने धरुणेषूदकेषु तस्थौ विद्युदात्मना तिष्ठति अनेन लोकत्रयवर्तित्वमिति ॥

१ अदातारं दूषयति—अप्रचेता अप्रकृष्टज्ञानः दाने चेतो मनो यस्य न भवति स मोघं व्यर्थमेवान्नं विन्दते लभते। विद्लृ लाभे तौदादिक 'शे मुचादीनाम्' (पा सू ७-१-५९) इति नुमागमः । इदं सत्यं यथार्थमेवेति ब्रवीमि, ऋषिरहं वदामि। न केवलं व्यर्थं किन्तु तस्य पुरुषस्य स वधः इत् वध एव अत्र परामृशतः तच्छब्दस्य वधसामानाधिकरण्यात् पुंलिङ्गता। यथा—'शैत्यं' इत्यत्र यत्कर्म स एव कर्तेति। अथवा स निर्थको वध एव यः पुरुषः अर्यमणं उपलक्षणमिदं सर्वान् देवान् अर्यमादीन् न पुष्यति हविः प्रदानेन न पोषयति नो नापि सखायं समानख्यानमभ्यागतमतिथिं मित्रवर्गं च न पोषयति पुष पुष्टौ दैवादिकः यच्छब्दाध्याहारादनिघातः अत एव केवलादी अदेः सुप्यजातौ णिनि अत उपधालक्षणा वृद्धिः केवलमसाक्षिकमश्नानः स केवलाघो भवति केवलपापवान्भवति अघमेव केवलं तस्य शिष्यते नैहिकं नामुष्मिकमिति। तस्माद्यथाकथंचिद्दातव्यमित्यभिप्रायः—सायणभाष्यम् ॥

२ शास्त्रस्येति पदस्य धाचकत्वसंबन्धोऽयं ) धर्ममीमांसेत्यादि सर्वं पदजातमेतच्छास्त्रवाचकमनर्थान्तरम् ( पर्याय ) इति योजना ।

सप्रपञ्चं निरूपिताः । तदिदं धर्मशास्त्रं कल्पसूत्राख्यं, प्रयोगशास्त्रं चेत्युभयं कर्मण इतिकर्तव्यतां दर्शयति । यथा चोक्तम्—

"धर्मे प्रमीयमाणे हि वेदेन करणात्मना ।
इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥ १ ॥ इति ॥

महर्षिजैमिनिप्रणीतमीमांसाशास्त्रमिदम् श्रीमदुपवर्षाचार्यभर्तृमित्रशबरस्वामिकुमारिलभट्टप्रभाकरमुरारिमिश्रपार्थसारथिमिश्रशालिकनाथखण्डदेवसोमनाथशम्भुभट्टानन्तभट्टप्रभृतिभिः सर्वदर्शनपारावारपारदृश्वभिर्वृत्तिभाष्यवार्तिकदीपिकारहस्यप्रभृतिभिरूहापोहविचारपरिप्लुतैः प्रबन्धरत्नैः परां किल कोटिं प्रचयस्य समारोपितम् ।

५२ यज्ञनिरूपणम्—देवऋणापाकरणाय योऽयं यज्ञः प्राक् प्रत्यपादि, तस्यैव निरूपणाय साकल्येन प्रवृत्तं पूर्वकाण्डम् । यज्ञमेव च व्याकर्णयितुं मीमांसाशास्त्रं प्रावर्तिष्ट । यज्ञियविषया एव वेदवाक्यान्युदाहृत्य न्यायेन निर्णीयन्ते मीमांसायाम् । नैतावता मीमांसाया यज्ञ एवोपयोगो नान्यत्रेति भ्रमितव्यम् । व्यावहारिकेष्वपि परःशतेषु विषयेषु योजयितुं मीमांसान्यायाः शक्यन्ते । न हि जायात्रर्थं कृतं मधुरान्नं पररसनां प्राप्य विपरीतं भवति । लौकिकेष्वपि राजकीयनियमादिषु तत्र तत्र मीमांसान्यायानुपयुञ्जन्ति विचारचातुरीधुरीणाः । स चायं यज्ञशब्दः "यजि देवपूजासङ्गतिकरणदानेषु" इति धातुना व्युत्पाद्यमानो ज्ञानयज्ञध्यानयज्ञद्रव्ययज्ञतपोयज्ञप्रजायज्ञादीनभिदधानोऽपि ज्योतिष्टोमादिश्रौतयज्ञेष्वेव रूढतमः । स तावद्यज्ञ एकविंशतिसंस्थः सप्तपाकयज्ञसंस्थाः, सप्तहविर्यज्ञसंस्थाः, सप्तसोमसंस्थाश्चेति । श्रवणाकर्मसर्पबल्याश्वयुजीकर्मप्रत्यवरोहणाष्टकापार्वणमाध्यावर्षरूपाः सप्त पाकयज्ञसंस्थाः, आधानाग्निहोत्रदर्शपूर्णमासचातुर्मास्याग्रयणनिरूढपशुबन्धसौत्रामणीरूपाः सप्तहविर्यज्ञसंस्थाः, अग्निष्टोमात्यग्निष्टोमोक्थ्यषोडशिवाजपेयातिरात्राप्तोर्यामरूपाः सप्त सोमसंस्थाः । इमाः सोमसंस्थाः याज्ञिकमर्यादया सप्त भवन्ति । मीमांसकाः पुनः—अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्र इति चतस्र एव संस्थाः सङ्गिरन्ते । अत्यग्निष्टोममग्निष्टोमे, वाजपेयं च षोडशिनि, अप्तोर्यामं चातिरात्रेऽन्तर्भावयन्ति । तदिदं पुनराध्वरिकं कर्म चतुर्विधं—एकाहसाध्यं, अहीनं, सत्रं, उभयात्मकं चेति । तत्र ज्योतिष्टोमादय एकाहसाध्यक्रतवः, एकसुत्याकत्वं तेषां लक्षणम् । द्विरात्राद्येकादशरात्रान्ता अहीनसंज्ञका गोष्टोमायुष्टोमपौण्डरीकादयः, लक्षणं च तेषां यजतिचोदनाचोदितत्वे सत्यनियतसङ्ख्याकयजमानकत्वम् । त्रयोदशादि सहस्रवर्षसुत्याकं रात्रिसत्रगवामयनकौण्डपायिनायनादिकं सत्रम्, तल्लक्षणन्तु—आसनोपायिचोदनाचोदितत्वे सति बहुयजमानकत्वम् । द्वादशाहसुत्याकं तूभयात्मकम्[1] ।

## (५) प्रकृतप्रकरणविमर्शः ।

५३ वैदिकानां प्रवृत्तिः—अथ सामान्यतो वैदिकं प्रमेयमुपवर्ण्य प्रस्तुतग्रन्थप्रका-

१ द्वादशसुत्याकं तु सत्राहीनोभयात्मकमित्यर्थः, किंचित् द्वादशाहं सत्रं किंचिदहीनमिति भावः ।

याध्ययनोपात्तविद्यांस्त्रैवर्णिकांक्ष्मन्ते, तदा तैरेव निराकाङ्क्षत्वान्न चतुर्थस्य विद्यामाक्षिपन्ति। तस्मात्त्रैवर्णिकानामेवाधिकारः कर्मणि।

४९ स्त्रीणामधिकारः—ननु शूद्रस्याध्ययनाधिकाराभावेन कर्मानधिकारवत् स्त्रीणामपि कर्मस्वनधिकारः। युक्तं चैतत्, स्वर्गकामादिवाक्ये पुंलिङ्गनिर्देशात्। कर्मणां द्रव्यसाध्यत्वेन स्त्रीणां "भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः" इति स्मृत्याऽधनत्वाभिधानाच्चेति चेन्न, तत्र स्वर्गकामपदेन पुंस्त्वस्याविवक्षितत्वात्। उद्देश्यगतं पुंस्त्वैकत्वादि न विवक्ष्यते। यथा—ग्रहैकत्वादि। न च निर्धनत्वमनधिकारे तन्त्रम्, फलकामनायाः प्रयोजकत्वात्। दानकाले "धर्मे च, अर्थे च, कामे च, नातिचरितव्या" इति संवादकरणाद्धर्मधनेनैवास्याधनत्वपरत्वात्। अथैवं स्त्रिया अधिकारे सिद्धे स्वातन्त्र्येणैव तस्याः कर्मणि प्रवृत्तिः स्यात्, कस्तां निरोद्धुमीष्टे; इति चेन्नैवम्—"क्षौमे वसानौ जायापती अग्निमादधीयाताम्" इत्यादिना दम्पत्योः सहैवाधिकारनिरूपणात्। उभयोः पार्थक्येन कर्मानुष्ठाने क्रतोर्वैगुण्यमापद्येत। तथाहि—तत्र तत्र कर्मणि पत्न्यवेक्षणं यजमानावेक्षणं चेत्युभयमाम्नायते। तत्र यजमानप्रयोगे पत्न्यवेक्षणं लुप्येत, पत्नीप्रयोगे च यजमानावेक्षणं लुप्येत। अतो द्वयोः सहाधिकारः। न च यजेतेत्येकत्वं विरुध्यते इति वाच्यम्, "अग्नीषोमौ देवता" इत्यत्र यथा देवतात्वं व्यासज्यवृत्ति, तथा कर्तृत्वमपि दम्पत्योर्व्यासज्यवृत्ति, यत्नमेवेत्यङ्गीकारात्। आज्यावेक्षणादिकर्मसु पुनर्यावदुपयुक्तं तावन्मात्रादिकमध्ययनं स्त्रीभिः कार्यम्। यथा रथकारेणाग्न्याधाने। "वर्षासु रथकार आदधीत" इत्यत्र त्रैवर्णिकस्य शिल्पोपजीवित्वप्रतिषेधात्त्रैवर्णिक एव कश्चन सौधन्वनापरपर्यायो माहिष्येण करण्यां जातः प्रतिलोमसंकरो जातिविशेषो रथजीवी रथकारसंज्ञक आधानाधिकृतत्वेन निर्दिश्यते। शब्दबलाच्च तस्याध्ययनादावनधिकृतस्याप्याधानेऽधिकारः प्राप्नोति। तच्च विधीयमानमाधानं स्वमात्रोपयुक्तमध्ययनमर्थादाक्षिपति। एवमेव "वास्तुमयं रौद्रं चरुं निर्वपेत्" इति प्रकृत्य "एतया निषादस्थपतिं याजयेत्" इत्यनेन निषादस्थपतेर्यजनाधिकारो दृश्यते। तत्र षष्ठीसमासे आश्रीयमाणे लक्षणा प्रसज्येतेति निषाद एव स्थपतिरिति सामानाधिकरण्येन व्युत्पत्तिराश्रिता। ततश्च रौद्रेष्टिमात्रोपयोगिन्यध्ययनेऽधिकार आक्षेपाल्लभ्यते। सर्वमेतदधिकारलक्षणे निर्णीतम्।

५० वेदव्यवहारः—सोऽयं मन्त्रब्राह्मणात्मको वेदः पूर्वकाण्डे यज्ञमेव सम्प्रपञ्चमुपवर्णयन्नुपक्षीणः। नैतावताऽन्यानैहिकामुष्मिकव्यवहारगोचरान् विषयान् न प्रतिपादयति, येन स व्यवहारमात्रप्रधानैर्नाद्रियेत, किन्तु दत्तपुत्रस्वीकारदायविभागसप्तमर्यादापालनान्नदानप्रपाप्रवर्तनमातुलकन्यापरिणयनप्रभृतीन् सर्वजनोपकारकान् विषयान् विधिमुखेन निषेधमुखेन वा प्रतिपादयन् भगवान् वेदकल्पद्रुमः कथं नु नाम सचेतसामनादरणीयतामावहेत्?। तत्र कांश्चिद्विषयान् सङ्क्षेपत उदाहरिष्यामः।

"न हि ग्रभायारणः सुशेवोऽन्योदर्यो मनसा मन्तवा उ ।
अधा चिदोकः पुनरित्स एत्या नो वाज्यभीषाळेतु नव्यः" ॥ (ऋ०५।२।७)

इति दत्तके (१)

"अभ्रातेव पुंस एति प्रतीची गर्तारुगिव सनये धनानाम् ।
जायेव पत्य उशती सुवासा उषा हस्रेव निरिणीते अप्सः"॥ (२।१।८)

"अविशेषेण पुत्राणां दायो भवति धर्मतः ।
मिथुनानां विसर्गादौ मनुः स्वायम्भुवोऽब्रवीत् ॥" (निरुक्ते अ० ३ खं० ५)

इति च दायभागे (२)

"सप्त मर्यादाः कवयस्ततक्षुस्तासामेकामिदभ्यंहुरो गात् ।
आयोर्ह स्कम्भ उपमस्य नीळे पथां विसर्गे धरुणेषु तस्थौ"(ऋ०७।५।३३।६)

इति सुरापानादिसप्तमर्यादापरिपालने ।

---

१ पूर्वस्मादनुवृत्त एवार्थोऽत्र प्रपद्यते–अरणोऽरममाणोऽन्योदर्यः सुशेवः सुखतमः सन् ग्रभाय पुनस्तेन ग्रहणाय मनसा मन्तवा उ मनसापि मन्तव्यो न भवति । अधा चित् अपि च सोऽन्योदर्यः ओक इव स्वस्थानमेव पुनरेति प्राप्नोति । अतो वाजी अन्नवान् अभीषाट् शत्रूणामभिभविता नव्यो नवजातः पुत्रो नोऽस्मान् आ एतु आगच्छतु ॥

२ अभ्रातेव भ्रातृरहितेव पुंसः पित्रादीन् प्रतीची स्वकीयस्थानात्प्रतिनिवृत्तमुखी सती एति गच्छति, यथा लोके भ्रातृरहिता योषित् स्वोचितवासोऽलङ्कारादिलाभाय पितृनेति सति भ्रातरि स एवोचितप्रदानादिना सम्यक् तोषयति, तदभावात्पितरमेव प्राप्नोति । यद्वा सति स्वभ्रातरि स एव पितुः पिण्डदानादिकं सन्तानकृत्यं करोति, तस्याभावात्स्वयमेव तत्कर्तुं पित्रादीन् गच्छति, तद्वदियमुषा अपि स्वोचितप्रकाशादिलाभाय स्वप्रकाशदानाय वा पितृभूतं सूर्यमाभिमुख्येन गच्छति, अयमेको दृष्टान्तः । तथा धनानां सनये गर्तारुगिव गर्तारोहिणी-वैश्यपरो दृष्टान्तः । गर्त इति गृहनाम हृदरोगर्त इति तन्नामसु पाठात् । अत्रोचितेन राजपुरुषैः न्यायनिर्णेतृ-भिरधिष्ठितं स्थानमुच्यते, तदारोहतीति गर्तारुक् । यथा लोके काचिद्धृतभर्तृका योषिद्धनानां स्वकीयरिक्थानां सनये लाभाय गर्तमागच्छति तां तु सभ्याः विचार्य यदीयं रिक्थं लभते चेद्दक्षैः सन्ताज्यं तदीयं धनं पितृरभि तथेयमपि धनानां भोजनसाधनानां प्रकाशानां सनये लाभाय गर्तमाकाशं सूर्यनिवासस्थानमारोहति । देश-विशेषाचारमपेक्ष्यैव दृष्टान्तितम् । किञ्च पत्ये उशती कामयमाना सुवासा दुकूलादिशोभनवसना स्वलङ्कृता पूर्वं रजोदर्शनसमये मलिनवस्त्रा सती स्नानानन्तरं शोभनवस्त्राभरणैः शोभमाना विशेषेण पतिं भागाय जाया यथा दीप्तेन सह सक्रीडते, तथेममुषा अपि नैशेनान्धकारेणावृतत्वात् मलिनवसनापि प्रभाते स्वतेजसावृतत्वात् सुवसना सती पतिस्थानीयेन सूर्येण साकं सक्रीडमाना हस्रेव हसनेव अप्सः दन्तस्थानीयानि रूपाणि नील-पीतादीनि, यद्वा निरूप्यमाणानि पदार्थजातानि निरिणीते निरवद्य रिणीते गमयति प्रकाशयतीत्यर्थः । यथा लोके काचिद्रमणीया योषित् स्मितव्याजेन दन्तान्विवृणुते तथेयमपि सर्वाणि रूपाणि प्रकाशयतीत्यर्थः । अयं मन्त्रो निरुक्ते स्पष्टं व्याख्यातः –अभ्रातृकेव पुंसः पितृनेत्यभिमुखी सन्तानकर्मणे पिण्डदानाय न पतिं गर्तारोहि-णीव धनलाभाय दाक्षिणाजी गर्तः सभास्थाणुर्गणाते सत्यसङ्गरो भवति तं तत्र यापुत्रा यापतिका सारोहति तां तत्रा-क्षैराघ्नन्ति सा रिक्थं लभते इति । जायेव पत्ये कामयमाना सुवासा ऋतुकालेषूषा हसनेव दन्तान्विवृणुत इति ॥

३ कवयो मेधाविन ऋषयः सप्त मर्यादाः कामजेभ्यः क्रोधजेभ्यश्चोत्थिताः । पानमक्षाः स्त्रियो मृगया दण्ड-पारुष्यमन्यदूषणमिति सप्त मर्यादाः । यद्वा स्तेयं गुरुतल्पारोहणं ब्रह्महत्या सुरापानं दुष्कृतकर्मणः पुनः पुनः सेवा पातकेऽनृतोद्यमिति निरुक्ते निर्दिष्टाः सप्त मर्यादाः अवस्थिताः । ततक्षुः तक्षति करोतिकर्मा सुष्ठु लङ्घनीया-

शनप्रयोजनादिकं परामृशामः । तत्र तावद्विदुषां त्रिधा किल प्रवृत्तिर्दृश्यते वैदिकग्रंथनिरीक्षणे । तत्रैके–प्रकृतिप्रत्ययादिसंशोधनपुरःसरमर्थमनुसन्दधाना व्याकरणपरिभूततां वैदिकग्रन्थानां निश्चेतुं यतन्ते । अन्ये पुनरैतिह्यान्वेषणे प्रणयमावध्नंतो वैदिकप्रबन्धेषु हरिश्चन्द्रप्रमगन्दादिविषयकान् भूयस इतिहासान् शृण्वन्तः पारिप्लवानि पठन्तः इतिहासमेव सूक्ष्मेक्षिकया विमृशन्ति । अपरे तु सामान्यतो विशेषतश्च प्रवृत्तानाचारान् निषेकादिसंस्कारान् अग्निष्टोमादिसंस्थाः यागहोमदानानि च साध्यसाधनेतिकर्तव्यतानिर्णयपुरःसरं मन्त्रार्थवादादिभिः प्रमिमाणाः वैदिकग्रन्थानालोडयन्तो दृश्यन्ते । त्रिविधांश्चैतान् परीक्षकानुदाजहार भगवान् यास्काचार्यो निरुक्ते–"तत्र नामाख्यातजानीति शाकटायनो नैरुक्तसमयश्च" ( १–१२–२ ) "त्वाष्ट्रोऽसुर इत्यैतिहासिकाः" ( २–१६–९ ) "तत्रैतन्नाशिका वेदयन्ते–त्रिंशदुक्थपात्राणि माध्यन्दिने सवन एकदेवतानि तान्येतस्मिन्काले एकेन प्रतिधानेन पिबन्ति तान्यत्र सरांस्युच्यन्ते" इत्यादिना ( ५–११–१ )

५४ यजुर्वेदद्वैविध्यम्—तत्र यज्ञादिकर्मणां बाहुल्येन यजुर्वेद एव वर्णनमुपलभ्यते । स च यजुर्वेदः शुक्ल-कृष्णभेदेन द्विधा विभज्यते । तत्र शुक्लयजुर्वेदो भगवता याज्ञवल्क्येन भगवन्तमादित्यमुपस्थाय वाजीरूपधरात्तस्मादध्यगामि । व्यासादधीतं यजुर्वेदं नैकाञ्छिष्यानध्यापयति भगवति वैशंपायनेऽकस्मात्प्रसक्तं बालब्रह्महत्यादिदोषमपाचिकीर्षव शिष्या गुरुणाऽनुज्ञाता उग्रं तपश्चेरुः । अतस्तेषां चरकाध्वर्यवै इति प्रथाऽऽसीत् । तानवजानन्निव याज्ञवल्क्योऽहमेक एव तपश्चरिष्यामि इति सावष्टम्भमुल्ललाप । ततो ब्राह्मणावधीरणात्कुपितेन वैशम्पायनेन "मत्तोऽधीतं यजुर्विसृज्यताम्" इत्याज्ञप्तो याज्ञवल्क्यो गुरोरधीतं यजुषां गणं छर्दित्वा निष्क्रान्तः सन्नपराणि यजूंषि गवेषयन् भगवन्तं प्रमीसयं सवितारमुपतस्थे । अथान्ये ऋषयस्तच्छर्दितान् यजुर्गणांस्तित्तिरिपक्षिरूपेणाजक्षन् । सा शाखा तैत्तिरीयेति पप्रथे । याज्ञवल्क्येन तेजोमयात्सहस्ररश्मेरधिगता शाखा शुक्लेति वाजसनीति च जेगीयते । वाजी अश्वः तद्रूपेण सूर्येण, वाजेभ्यः केसरेभ्यः वाजेन वेगेन वा सन्यस्ता उपदिष्टा वाजसनी, वाजसनेयीत्यपि "अन्नं वै वाजः" इति श्रुतेर्वाजस्यान्नस्य सनिर्दानं अस्ति सोऽयं वाजसनिः तस्य पुत्रो वाजसनेयो याज्ञवल्क्यः, तेनाधीता शाखा वाजसनेयी तस्या अध्येतारोऽपि वाजसनेयिनः । याज्ञवल्क्येन च कण्वमध्यन्दिनादिभ्यः पञ्चदशशिष्येभ्योऽध्यापितः सोऽयं शुक्लो यजुर्वेदः । मन्त्रब्राह्मणयोर्विविक्तत्वं चास्मिन् वेदे कृष्णयजुर्वेदाद्वैलक्षण्यमिति शुक्लपदं साधु सङ्गच्छते । चरकाध्वर्युभिरधीतो वेदः कृष्णयजुःसंज्ञकः चरणव्यूहभाष्ये–मध्याह्ने शुक्लवर्णेन सूर्येण दत्तः स शुक्लयजुर्वेदः परिसङ्ख्यातः वेदोपक्रमणे चतुर्दशीयुक्तपूर्णिमाग्रहणाच्छुक्लयजुः कृष्णपक्षप्रतिपद्युक्तपौर्णमासीग्रहणात्कृष्णयजुरिति वेति प्रोक्तम् । तत्र शुक्लयजुर्वेदो मध्यभारतवर्तिन्या नर्मदाया उदीच्ये देशे बाहुल्येनोपलभ्यते नर्मदाया दक्षिणापथे कृष्णयजुर्वेदो भूम्नोपलभ्यते ।

५५ कृष्णयजुर्वेदे कर्मणां विप्रकीर्णत्वं मन्त्रब्राह्मणयोरविविक्तत्वं च—अस्य च कृष्णयजुर्वेदस्य कृष्णसंज्ञा क्रमनैरपेक्ष्येण विप्रकीर्णतया कर्मप्रतिपादकत्वात् मन्त्रब्राह्मणयोरविविक्ततयाऽऽम्नानाच्च मिश्रत्वनिबन्धना प्ररूढा । तथाहि—संहितायाः द्वितीयकाण्डे पञ्चमषष्ठप्रपाठकयोर्दर्शपूर्णमासब्राह्मणं मंत्राश्च । संहितायाः प्रथमकाण्डे प्रथमप्रपाठके—दर्शपूर्णमासाध्वर्यवम् । संहितायाः प्रथमकाण्डे षष्ठप्रपाठके—दर्शपूर्णमासयाजमानम् । ब्राह्मणस्य तृतीयकाण्डे सप्तमप्रपाठकेऽपि—दर्शपूर्णमासाध्वर्यवं याजमानं च । ब्राह्मणस्य तृतीयकाण्डे द्वितीयतृतीयप्रपाठकयोः—दर्शपूर्णमासब्राह्मणम् । संहितायाः प्रथमकाण्डे द्वितीयतृतीयचतुर्थप्रपाठकेषु तृतीयकाण्डे च, ब्राह्मणस्य तृतीयकाण्डे सप्तमप्रपाठके च—सौमिकाध्वर्यवम् । संहितायाः तृतीयषष्ठकाण्डयोः सौमिकं ब्राह्मणम् । संहितायाः प्रथमकाण्डे पञ्चमप्रपाठकेऽग्निहोत्रोपस्थानमन्त्रा ब्राह्मणं च । ब्राह्मणस्य द्वितीयकाण्डे प्रथमप्रपाठके—अग्निहोत्रमन्त्रास्तद्ब्राह्मणञ्च । संहितायाः प्रथमकाण्डे पञ्चमप्रपाठके, ब्राह्मणस्य प्रथमकाण्डे द्वितीयप्रपाठके—आधानमन्त्रास्तद्ब्राह्मणञ्च । संहितायाः प्रथमकाण्डे पञ्चमप्रपाठके—पुनराधेयमन्त्रास्तद्ब्राह्मणञ्च—ब्राह्मणस्य प्रथमकाण्डे तृतीयप्रपाठके—पुनराधेयब्राह्मणम् । संहितायाश्चतुर्थकाण्डस्य—ब्राह्मणभागः पञ्चमकाण्डे आम्नातः, मन्त्राश्च केचित्—इति मन्त्रब्राह्मणयोर्ध्योर्मिश्रणं दृश्यते संहितेति समाख्याविषये मन्ये । एवमेव ब्राह्मणेऽपि—संहितायाः प्रथमतृतीयकाण्डगतसौमिकमन्त्राणां ब्राह्मणतृतीयकाण्डसप्तमप्रपाठकगतसौमिकमन्त्राणाञ्च ब्राह्मणभागः संहितायाः षष्ठकाण्डे आम्नातः इत्यादि नैतत्तिरोहितमध्येतॄणाम् । काण्वसंहिताभाष्यभूमिकायां चतुर्वेदभाष्यप्रणेतृभिः श्रीसायणाचार्यैरपि—

"आध्वर्यवं कश्चिद्धौत्रं कचिदित्यव्यवस्थया ।
बुद्धिमालिन्यहेतुत्वाद्यजुः कृष्णमितीर्यते ॥ १ ॥
याज्ञवल्क्यस्ततः सूर्यमाराध्यास्मादधीतवान् ।
व्यवस्थितप्रकरणं यजुः शुक्लं तदीर्यते ॥ २ ॥

इति प्रतिपादितम् । शुक्लयजुर्वेदस्य दर्शपूर्णमासादिकर्मणामसङ्कीर्णानि प्रकरणानीति याज्ञिकैः सुखावबोधान्येवेति न तत्र काचिदनुपपत्तिर्नाम । कृष्णयजुर्वेदस्य तु विप्रकीर्णानि दर्शपूर्णमासादिकर्मणां प्रकरणानि । एकत्रैको मन्त्रः, अपरत्र चान्यो मन्त्रः, यत्रैतत्कर्मोपयोगी मन्त्रः, तत्रान्यदेव ब्राह्मणं, इति कर्मणां विविक्ततया व्यवस्था न कापि याज्ञिकैः सुलभावबोधा सन्दृश्यते । याः खलु यज्ञसंस्थाः एकविंशतिरनुष्ठेया ब्राह्मणैः, तास्वेकाऽपि कृष्णयजुर्वेदे साकल्येन मन्त्रब्राह्मणादिभिः प्रकरणशो विनिबद्धा नोपलभ्यते । ऐतिहासिकैरपि तत्तत्कर्मणामितिहासो नैकत्रावबोद्धुं पार्यते । एवं नैरुक्तैरपि । यदि कस्यचित्कर्मण इतिहासो वा पदानां निरुक्तिर्वा प्रयोगविधिसमर्पकाणि ब्राह्मणानि मन्त्रा वा विशिष्टाकारतयैकप्रत्ययगोचरतामापादयितुमिष्येरन्, तदा महता परिश्रमेण समग्रां संहितामशेषं ब्राह्मणं निखिलमारण्यकं चालोड्य सर्वं निर्णिनीषितं निर्णेतव्यमापतति । वस्तुतस्तु—कः खलु नियोक्ता वा पर्यनुयोक्ता वा भगवत्याः श्रुतेः कथमेवंविधः पाठः ? इति । यतः सर्वज्ञो जगदीश्वरोऽपि पूर्व-

कल्पीयानुपूर्वीसमानानुपूर्वीकमेव वेदं स्मरति कल्पादाविति न तत्रापि स्वातन्त्र्यम् । वयमेव पुनर्मितम्पचमतयः स्वमौढ्यमपह्नुवाना वेदस्येदं विप्रकीर्णतादिकमुल्लपामः । यथा—

विपुलहृदयाभियोग्ये खिद्यति काव्ये जडो न मौर्ख्ये स्वे ।
निन्दति कञ्चुककारं प्रायः शुष्कस्तनी नारी ॥ इति ।

तथापि तत्तत्कर्मोपयोगिमन्त्रब्राह्मणादीनां प्रकरणशो विभक्ता रचना यदि भवेत्, तदा पदपदार्थैकवाक्यतादिविचारः, इतिहासपरिज्ञानं, महाप्रकरणावान्तरप्रकरणादिसन्दर्भविमर्शनपुरःसरमङ्गप्रधानादिप्रयोगानुपूर्वीविचारश्च सुकरस्त्रयाणामपि निरीक्षकाणां भविष्यतीति मन्यामहे । तदेव प्राप्तकालमिदानीम् । नैतावता कैश्चिदपि भ्रमितव्यम्, यदध्ययनपारायणादौ परम्पराप्राप्ता पाठानुपूर्वी भज्येतेति । हं हो! न वयमानुपूर्वीं विपरिणमयितुं प्रयस्यते । कः खलु जगतीतले स्वरवर्णमात्रादिभिरपि वाऽऽनुपूर्व्या वा भगवन्तमाम्नायमन्यथयितुमीष्टे ? । किन्त्वेकैकशः कर्मोपयुक्तान् मन्त्रब्राह्मणभागानेकत्र सङ्कलय्य प्रकाशयितुं प्रयत्यते । येन याज्ञिकादीनां महानुपकारो भविष्यतीति बलवती नः प्रत्याशा । प्रकरणशो विभागः साम्प्रतं कथमावश्यकः इत्येतद्दिङ्मात्रमेवोदाह्रियते । यथा—सोमयागानुष्ठाने तत्सम्बन्धिनो विधिमन्त्रार्थवादाः, इतिकर्तव्यताप्रतिपादको ब्राह्मणभागः आरण्यकञ्चेति त्रयाणामपि ग्रन्थानां परिशीलनमावश्यकम् । तथा च साम्प्रतं संहितायां प्रथमतृतीयषष्ठकाण्डेषु ब्राह्मणे प्रथमतृतीयकाण्डयोः आरण्यके च चतुर्थपञ्चमप्रपाठकयोः सोमोपयोगीन्येव वचनान्यन्विष्यान्विष्य सोमयागानुपूर्वीं निर्णीय सोमयागोऽनुष्ठातव्यो भवति । तत्र च महान्क्लेशो याज्ञिकानाम् । आपातज्ञानिनां सर्वमिदं सर्वथा कष्टसाध्यम् । इदानीं प्रचिकाशयिषिते ग्रन्थे सोमोपयोगीनि सर्वाणि वचनजातान्येकत्र सङ्कलितान्येव झटिति समुपलभ्यन्त इति सर्वोऽपि याज्ञिकः सुखमेवानुष्ठातुं प्रभवेत् । ननु प्रयोगानुपूर्वीप्रतिपादनपरेषु कल्पसूत्रग्रन्थेषु जाग्रत्सु कुतोऽयं प्रकरणविभागायासः इति चेन्न—तत्र सामान्यतः प्रयोगप्रतिपादनेऽपि तत्तत्कर्मसम्बन्धिविध्यर्थवादादीनामभावात्, मन्त्राणां च प्रतीकग्रहणमात्रेणैव पठनात्, अङ्गप्रधानादिपरिज्ञानस्य भूतार्थवादादिनेतिहासपरिज्ञानस्य मन्त्रार्थपरिज्ञानस्य च दुःसम्पादत्वात् ।

५६ **प्रकृतग्रन्थस्वरूपम्**—अग्न्याधानाग्निहोत्रपिण्डपितृयज्ञाग्रयणकूष्माण्डहोमसोमराजसूयवाजपेयाश्वमेधाप्तोर्यामप्रभृतिकर्मणां संहिताब्राह्मणारण्यकोपनिषद्भाष्यगतवाक्यनिर्देशपुरःसरं मन्त्रवाक्यविभागटिप्पणीसहितान्यासन्नत्रिंशत्प्रकरणानि विभज्य संगृहीतानि । सर्वेषामपि मन्त्राणां विद्यारण्यप्रणीतं भाष्यमप्यधस्तान्निवेशितम् ।

५७ **प्रयोजनम्**—किञ्च "यं यं क्रतुमधीते तेन तेनास्येष्टं भवति" इति हि श्रूयते । सर्वैः सर्वेऽपि क्रतवो नानुष्ठातुं पार्यन्ते इति विश्वजनीनम् । ईदृशे पुनः कराले काले साकल्येन वेदाध्ययनं दुष्करम् । अर्थज्ञानं च दूरापेतम् । विधेरज्ञानेन, द्रविणविरहेण, अलसतया, विधेयाशक्यत्वात्, अश्रद्धातिरेकाच्च श्रौतकर्माण्यनुष्ठातुं प्रायेण न प्रवर्तन्ते दुर्बला ब्राह्मणाः । अत एवाह वेङ्कटाध्वरी "आपस्तम्बः स किल कलयेत्सम्यगौपासनं यः" इति । तदेवं यो हि यं क्रतुं यियक्षमाणोऽपि न यष्टुं प्रभवति, तेन तत्प्रतिपादको वेदभागोऽधीयमानस्तत्त-

न्भवचनं "सूत्रपाठक्रमो विनिमितो भट्टोजीदीक्षितैः" इति । तथाविधामेव सिद्धान्तकौमुदीमधिकृत्य व्यरचिषत प्रौढमनोरमा–शब्देन्दुशेखरप्रभृतयः प्रगल्भतमाः प्रबन्धाः श्रीभट्टोजीदीक्षितनागेशभट्टप्रभृतिभिर्व्याकरणारण्यानीविहरणपञ्चास्यैः । सूत्रपाठव्युत्क्रमेण कौमुद्यां प्रकरणविभागः समासतः प्रदर्श्यते, यथा—

दशगण्यन्तर्गते भ्वादिगणे–'ह्रस्व रन्' इति ( २।४।१०५ )
" " 'इटोत्' इति ( ३।४।१०६ )
" " 'आत्मनेपदेष्वनतः' इति ( ७।१।५ )
समासप्रकरणे बहुव्रीहौ–'अप्पूरणीप्रमाण्योः' इति ( ५।४।११६ )
" " 'केऽणः' इति ( ७।४।१३ )
तद्धितप्रकरणे 'पीलाया वा' इति ( ४।१।११८ )
" 'तत्प्रत्ययस्य' इति ( ७।३।२९ )
कारके 'सम्बोधने च' इति ( २।३।४७ )
" 'कारके' इति ( १।४।२३ ) इति ।

## कृष्णयजुर्वेदप्रकरणकौमुदीविभागाः

६० दार्ष्टान्तिकोपादानम्—एवमत्राप्यनुष्ठातृणामनुष्ठानसौकर्यायानुष्ठेयक्रममनुरुध्य–

(१) आधानम्
(२) पुनराधानम्
(३) अग्निहोत्रम्(प्रवासोपस्थानादिसहितम्),
(४) अन्वारम्भणीयेष्टिः,
(५) दर्शपूर्णमासौ,
(६) आग्रयणम्
(७) पिण्डपितृयज्ञः,
(८) सौत्रामणी,
(९) सोमः ( सौमिकब्राह्मणसहितः ),
(१०) चयनम्,
(११) जयादिहोमः,
(१२) देविकाहवींषि,
(१३) वाजपेयम्,
(१४) राजसूयम्,
(१५) अश्वमेधः,
(१६) काम्येष्टयः,
(१७) दशहोत्रप्रकरणम्,
(१८) अग्न्यादितत्तद्देवताककर्मसु विनियुक्तानां मन्त्राणां प्रकरणम्,
(१९) सवप्रकरणम्,
(२०) नक्षत्रसत्रप्रकरणम्,
(२१) पुरुषमेधः,
(२२) पशुपालम्भः,
(२३) वशागर्भदर्शनादि,
(२४) गवामयनं ( द्वादशाहादि सत्रप्रकरणम् ),
(२५) हौत्रप्रकरणम्,
(२६) सावित्रचयनादि (नाचिकेतं, चातुर्होत्रं,वैश्वसृजम्, आरुणकेतुकम्),
(२७) उपवीतादिप्रकरणम् ( उपवीतसन्ध्याकूष्माण्डहोमब्रह्मयज्ञप्रशंसा),
(२८) पितृमेधब्रह्ममेधौ,
(२९) ब्रह्मविद्या ।

1 प्रकरणानुक्रमणी नैषाचित् प्रकरणानामभिधाननात्र निर्दिष्टमस्ति ।

चेति प्रकरणानि विभज्य यथोचितं मन्त्रा ब्राह्मणवचनानि च विनिवेशितानि । अध्ययन-पारायण-ब्रह्मयज्ञादा तु पारम्परिकोऽनादिसिद्ध एव क्रमो जागर्तीति न तत्र चोद्यलेशः कश्चिदवतरति । दृश्यन्ते चाद्याप्यर्वाचीनैः पण्डितैरनुष्ठेयकर्मोपयुक्ता मन्त्रा मूलग्रन्थेभ्यः उद्धृत्य सङ्कलिता अध्येतॄणां सौकर्याय । यथा-ऋग्वेदे-मन्त्रसंहिता ।

६१ सङ्गृहीत्रभिनन्दनम्—तदेवं महता परिश्रमेण मीमांसाविद्यालयाग्निहोत्रशालामीमांसाग्रन्थप्रकाशकसमित्यादिसंस्थाप्रतिष्ठापकैः संस्कारमीमांसाधानपद्धतिदर्शपूर्णमासप्रकाशाग्निहोत्रचन्द्रिकापश्वालम्भमीमांसाप्रभृतिनैकप्रबन्धप्रणेतृभिर्व्याकरणवेदान्तश्रौतविद्यापारदृश्वभिर्मीमांसाशास्त्रोद्धरणगृहीतदीक्षैरग्निष्टोमाप्तोर्यामप्रभृतिश्रौतकर्मप्रवर्तकैर्मीमांसाशिरोमणि-सरस्वतीभूषण-प्रभृत्युपाधिसमलङ्कृतैः किञ्जवडेकरोपाह्व-श्रीवामनशास्त्रिभिः सङ्गृहीतोऽयं कृष्णयजुर्वेदप्रकरणकौमुदीप्रबन्ध इति सुबहु किलोपकृतं वैदिकविद्वन्निवहेषु । न केवलं श्रौतविद्याप्रवीणैः, न वा मीमांसकैः, नापि वा वेदार्थविद्भिरीदृशो ग्रन्थः सङ्ग्रहीतुं पार्येत इति सर्वथा समभिनन्दनीयं शास्त्रिमहोदयानां समुचितं पाण्डित्यम् । प्रशस्यतममिममुद्यमं समभिनन्द्य सर्वेऽपि भारतीयाः पण्डिताः प्रबन्धमिममुपयुञ्जानाः सफलयेयुः श्रमं शास्त्रिवर्याणामिति प्रलपद्यामासहे ।

१८५९ ईश्वरनामसंवत्सरकार्तिकशुद्धप्रतिपत् ।

श्रीजगद्गुरुशङ्कराचार्य
संस्कृतपाठशाला,
ता० ४।११।३७. धारवाड

} नागेशशास्त्री उप्पिनबेट्टगेरिः



## आयतनानां प्रमाणानि ।



**द्वादशसु विक्रामेष्वग्निमादधीत**—( तै० ब्रा० का० १।१।४ )

**गार्हपत्यः**—अग्रेण मध्यमं वंशं गार्हपत्यायतनं भवति । ( आप० श्रौत–अ० ५ क० ४ सू० २ )

**आहवनीयः**—तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याहवनीयायतनम् । एकादशसु राजन्यस्य द्वादशसु वैश्यस्य ( आप० श्रौ० ५।४।३ )

**दक्षिणाग्निः**—दक्षिणतः पुरस्ताद्वितृतीयदेशे गार्हपत्यस्य नेदीयसि दक्षिणाग्नेरायतनम् ( आप० श्रौ० ५।४।५ ) अन्यदाहवनीयागारमन्यद्गार्हपत्यस्य ( आप० श्रौ० ५।४।६ )

**सभ्यः**—अग्रेणाहवनीयं सभायां सभ्यः ( आप० श्रौ० ५।४।७ )

**आवसथ्यः**—तं पूर्वेणावसथ आवसथ्यः । ( आप० श्रौ० ५।४।७ )

**वेदिः**—अपरेणाहवनीयं यजमानमात्रीमपरिमितां वा प्राचीं वेदिं करोति । यथाऽऽसन्नानि हवींषि संभवेयुरेवं तिरश्चीम् ( आप० २।१।१–२ )

**उत्करः**—पुरस्तात्त्रितृतीयदेशे उदग्द्विपदे अपरिमिते वा वेदेर्निवपति स उत्करः । ( आप० श्रौ० २।१।६–७ )

## आपस्तम्बशुल्वसूत्रम् ।

( पटलः ९, आदितः खण्डः ४ )

गार्हपत्याहवनीययोरन्तरालं पञ्चधा षड्धा वा संविभज्य षष्ठं सप्तमं वा भागमागन्तुमुपसमस्य समं त्रैधं विभज्यापरस्मिंस्तृतीये लक्षणं कृत्वा गार्हपत्याहवनीययोरन्तौ नियम्य लक्षणेन दक्षिणापायम्य निमित्तं करोति तद्दक्षिणाग्नेरायतनम् । श्रुतिसामर्थ्यात् ।

सर्वेषामन्यायतनानि चतुरस्राणि मण्डलानि वा । इह तु मण्डलं गार्हपत्यमर्धमण्डलाकारमन्वाहार्यपचनम् । चतुरस्रमाहवनीयमिति स्मरन्ति मण्डलचतुरस्रयोरुक्तो विधिः । इदानीं दक्षिणाग्नेर्धनुराकार उच्यते—पिशीलद्विकरण्या चतुरस्रं कृत्वा पूर्वोक्तेन विधानेन मण्डलं कुर्यात् । तस्य मण्डलस्य विष्कम्भचतुर्भागे दक्षिणाग्नेः पूर्वं निहतात्पश्चिमकोणादुदगपसार्य शङ्कुं निहत्य तस्मिन् पाशं प्रतिमुच्य विष्कम्भार्धेन मण्डले परिलिख्योत्तरमर्धं त्यजेत् । तत्र श्लोकौ भवतः—दक्षिणाग्नेर्हिताच्छङ्कोरुदक्छङ्कुर्दशाङ्गुले । एकादशतिलेऽन्ते कार्यस्य धनुषा समः ॥ तस्मिन्पाशं प्रतिमुच्य विंशत्यायतया लिखेत् । ऊनया तु द्वाविंशतितिलैरर्धं त्यजेदुदक् ॥ इति ।—कपर्दिभाष्यम् ।

अन्याम्यायतनानि पिशीलमात्राणि, अथवा अशेषभिष्ण्यो लीयत इति प्राजहितस्यापि धिष्ण्यस्य दर्शनादायतनानां चतुरस्रमण्डलयोरनियमेन प्राप्तयोरपि मण्डलमेव गार्हपत्यायतनं "आयो वै त्रयी विद्या" इति मन्त्रानुवाकपर्याये तस्य पृथिवीस्तुतेः तदाकारत्वाच्च । तथा अर्धमण्डलाकारं धनुराकारं दक्षिणाग्न्यायतनम्, तत्रैवान्तरिक्षस्तुते: तदाकारत्वाच्च नभसः । चतुरस्रमाहवनीयम्, तत्रैव द्युलोकस्तुतेः चतुरस्रमैन्द्रस्थानमिति शाखान्तरे दर्शनाच्च । सभ्यावसथ्ययोरपि चतुरस्रमेव तयोस्तद्विकारत्वात् । अत्र बोधः गार्हपत्यायतने पिशीलमात्रं चतुरस्रं विहृत्य मण्डलं कुर्यात् दक्षिणाग्नेरपि वचनात् । पिशीलद्विकरण्या चतुरस्रं विहृत्य मण्डलीकृत्य मण्डलविष्कम्भचतुर्भागेन दक्षिणाग्न्यायतनं तन्निमित्तादुत्तरतः शङ्कुं निहत्य तत्र शङ्कौ तद्विष्कम्भमध्यं नियम्यान्तौ समौ कृत्वा मण्डलं विलिख्य मण्डलमध्ये प्राची लेखा विलिख्य उदगर्धं त्यजेत् । दक्षिणार्धं आयतनं गार्हपत्यस्य पुरस्तादष्टप्रक्रमादीनन्तीस्य पिशीलमात्रं चतुरस्रमाहवनीयं कुर्यात् तत्पुरस्तात् संचरमवशिष्य आहवनीयवत् सभ्यं तत्पुरस्तादावसथ्यमपि । तदिति पिशीलप्रमाणं च । द्विप्रादेशं पिशीलम् । मुष्टिकृतोऽरत्निः पिशीलमित्येके । बाह्वोरन्तरालं पिशीलमित्येक इति केचित् ।

—करविन्दव्याख्या ।

सर्वाण्येवाग्न्यायतनानि पिशीलमात्राणि चतुरस्राणि परिमण्डलानि वा धिष्ण्यत्वान्मण्डलं गार्हपत्यस्य । अर्धमण्डलं दक्षिणाग्नेश्चतुरस्रमाहवनीयस्येत्येवैतिहासिका ऐतस्सर्वाणि चायतनानि क्षेत्रतस्तुल्यानीत्याहुः । तत्रोक्तो मण्डलविधिः आहवनीयस्याक्ष्णया रज्ज्वा चतुरस्रं विहृत्य विधानेन मण्डलं कृत्वा उत्तरार्धं जह्यात्तद्दक्षिणाग्न्यायतनम् ॥

—सुंदरराजीया व्याख्या ।

## ( १ ) आधानगतमन्त्रवाक्यविषयाः ।



## ( २ ) पुनराधानगतमन्त्रवाक्यविषयाः ।

# आधानप्रकरणम् ।

## सभाष्यं तैत्तिरीयब्राह्मणम् ।

तत्र प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ।

कृत्तिकास्वग्निमादधीत । एतद्वा अग्नेर्नक्षत्रम् । यत्कृत्तिकाः । स्वायामेवैनं देवतायामाधाय । ब्रह्मवर्चसी भवति । मुखं वा एतन्नक्षत्राणाम् । यत्कृत्तिकाः । यः कृत्तिकास्वग्निमाधत्ते । मुख्य एव भवति । अथो खलु । (१) अग्निनक्षत्रमित्यपचायन्ति । गृहान्ह दाहुको भवति ॥ प्रजापती रोहिण्यामग्निमसृजत । तं देवा रोहिण्यामादधत । ततो वै ते सर्वान्रोहानरोहन् । तद्रोहिण्यै रोहिणित्वम् । यो रोहिण्यामग्निमाधत्ते । ऋध्नोत्येव । सर्वान्रोहान्रोहति ॥ देवा वै

---

### श्रीमत्सायणाचार्यविरचितमाधानब्राह्मणभाष्यम् ।

(१) अथाऽऽधानप्रकरणमारभ्यते—तत्रास्मिन्ननुवाके कालविशेषं विधत्ते—(कृत्तिकास्विति-) अग्निचयनकाण्डेऽम्बादुलानितामिरित्याद्याः कृत्तिकाख्या यस्मिन्दिने चन्द्रेण संयुज्यन्ते तस्मिन्दिने तासु कृत्तिकासु चन्द्रयोगं प्राप्तासु [अग्निम् आदधीत] अग्न्याधानं कुर्यात् । यत् एतत् कृत्तिकोपलक्षितं तत् एतत् [अग्नेः] अग्निसंबन्धि नक्षत्रम् । अत एवान्यत्राऽऽम्नातम्—"कृत्तिका नक्षत्रमग्निर्देवता" इति । अत आधेयस्याग्नेः कृत्तिकास्वाधाने सति [स्वायाम्] स्वरूपभूतायाम् एव देवतायाम् आधानं कृतं भवति । अग्नेर्ब्रह्मणाभिमानित्वात्तत्प्रसादेन [ब्रह्मवर्चसी भवति] अधीतश्रुताध्ययनरूपब्रह्मवर्चससंपन्नो भवति ॥

(२) प्रकारान्तरेण प्रशंसति—(मुखं वा इति-) कृत्तिकाः इति यत् तत् एतत् नक्षत्राणां मध्ये मुखं प्रथमं नक्षत्रम् । अत एव नक्षत्रप्रतिपादकेऽप्यनुवाक आदौ पठ्यते "कृत्तिका नक्षत्रमग्निर्देवता" इत्येकत्र । "अग्नेः कृत्तिकाः । शुक्रं परस्तात्" इत्यन्यत्र । "अग्निर्नः पातु कृत्तिकाः । नक्षत्रं देवमिन्द्रियम्" इत्यन्यत्र । तदेतत्सर्वं मन्त्रानुवाकेष्विष्टिविधायकेऽप्यनुवाके एतदीयेष्टिरादावाम्नाता—"अग्निर्वा अकामयत । अन्नादो देवानां स्यामिति । स एतमग्नये कृत्तिकाभ्यः पुरोडाशमष्टाकपालं निरवपत्" इति । अतो मुखभूतासु कृत्तिकास्वादधानः पुमान्सर्वेषु स्वयं मुख्यो भवति ॥

(३) अस्मिन्पक्षे गुणमुक्त्वा दोषमपि कंचिद्दर्शयति—(अथो खल्विति-) पूर्वोक्तगुणवैलक्षण्यद्योतनाय अथो शब्दः । अग्निदाः खलु अग्निदेवताकमिदं नक्षत्रम् इति एवम् [अपचायन्ति] निन्दन्ति । तस्मिन्नक्षत्र आदधानस्य यजमानस्य गृहान् सोऽग्निः दाहुकः दहनशीलो भवति ॥

(४) अथ निर्दोषं नक्षत्रं विधत्ते—(प्रजापतिरिति-)[रोहिण्याम्] रुह्यन्ते प्राप्यन्त इति रोहाः कामास्ते च यस्या रुह्यन्ते सा रोहिणी । ऋध्नोत्येव समृद्धो भवत्येव । समृद्धिरेव 'सर्वान्-' इत्यनेन विशदीकृता ॥

(५) नक्षत्रान्तरं विधत्ते—(देवा इति) भद्राः धनसपत्ना आधित्सन्त आधातुमैच्छन् । तेषां श्रद्धाराहित्यात् अग्निः सम्यक् आहितो न आसीत् । [अथ] अनन्तरं तेन विकल्पानुष्ठानेन तदीयं

---

१ तै. स. ४. ४. ५ इत्यत्र अम्बा, दुला, नितत्नि, अभ्रयन्ती, मेघयन्ती, वर्षयन्ती, चुपुणिका एताः कृत्तिकाः समाम्नाताः । २ तै. स. ४. ४. १०. । ३ तै. स. ४. ४. १०. । ४ तै. ब्रा. ३. १. १. । ५ तै. ब्रा. ३. १. १. । ६ तै. ब्रा. ३. १. ४. ।

मीमांसकशिरोमणिसरस्वतीभूषणेत्याद्युपाधिविभूषितैः पण्डितप्रवरैः किंजवडेकरोपाह्वैः श्रीवामनशास्त्रिभिः प्रणीता

# कृष्णयजुर्वेदप्रकरणकौमुदी ।

प्रथमो भागः ।

## आधानपुनराधाने ।

भद्राः सन्तोऽग्निमाधित्सन्त ( २ )। तेषामनाहितोऽग्निरासीत्। अथैभ्यो वामं वस्वपाक्रामत्। ते पुनर्वस्वोरादधत। ततो वै तान्वामं वसूपावर्तत। यः पुरा भद्रः सन्पापीयान्त्स्यात्। स पुनर्वस्वोरग्निमादधीत। पुनरेवैनं वामं वसूपावर्तते। भद्रो भवति॥ यः कामयेत दानकामा मे प्रजाः स्युरिति। स पूर्वयोः फल्गुन्योरग्निमादधीत ( ३ )। अर्यम्णो वा एतन्नक्षत्रम्। यत्पूर्वे फल्गुनी। अर्यमेति तमाहुर्यो ददाति। दानकामा अस्मै प्रजा भवन्ति॥ यः कामयेत भगी स्यामिति। स उत्तरयोः फल्गुन्योरग्निमादधीत। भगस्य वा एतन्नक्षत्रम्। यदुत्तरे फल्गुनी। भग्येव भवति॥ कालकञ्जा वै नामासुरा आसन् ( ४ )। ते सुवर्गाय लोकायाग्निमचिन्वत। पुरुष इष्टकामुपादधात्पुरुष इष्ट-

वामं वननीयं मणिमुक्तादिकं [वसु] धनं तेभ्योऽपगतम्। ततस्ते देवाः श्रद्धालवो भूत्वा पुनर्वसू नक्षत्रावयवौ तारकाविशेषौ यस्मिन्दिने चन्द्रेण युक्तौ तस्मिन्दिनेऽग्निं सम्यगाधाय तद्धनं पुनर्लब्धवन्तः। ततोऽप्यन्योऽपि पूर्वं धनिकः सन् केनापि निमित्तेन पश्चात् पापीयान् स्यात् अत्यन्तनिर्धनो भवेत्। स पुनर्वस्वोरग्निम् आधाय पूर्ववद्धनं प्राप्य सर्वेषां मध्ये भद्रः पूज्यो भवति। पुनः अपि वसु [उपावर्तते] लभ्यते यतोऽसौ पुनर्वसू॥

(६) अथ नक्षत्रान्तरं विधत्ते—(यः कामयेतेति–) सर्वाः प्रजाः मे मह्यं धनं दातुमिच्छन्त्विति यः यजमानः कामयेत सः अग्निं पूर्वयोः फल्गुन्योः आधाय प्रजाभिर्दत्तं धनं लभते। एतच्च नक्षत्रमर्यमदेवताकम्। "फल्गुनीनक्षत्रमर्यमा देवता" इत्यन्यत्राऽऽम्नानात्। अरीन्यमयति धनदानेन वशीकरोति इति अर्यमा धनस्य दाता॥

(७) नक्षत्रान्तरं विधत्ते—(यः कामयेतेति–) भगी ऐश्वर्यादिगुणषट्ककामः। तथा च स्मर्यते— "ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः। ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा" इति॥ तत्काम उत्तरयोः फल्गुन्योः आधाय तत्फलं प्राप्नोति। उत्तरयोः फल्गुन्योर्भगदेवताकत्वमन्यत्राऽऽम्नातम्। "फल्गुनी नक्षत्रं भगो देवता" इति॥

(८) अथ नक्षत्रान्तरं विधत्ते—(कालकञ्जा इति–) कालकञ्जशब्दोऽसुरविशेषनामधेयम्। ते च असुराः यदा स्वर्गार्थम् अग्निं चेतुं प्रारभन्त तदानीमेकैकोऽसुर एकैकाम् इष्टकामुपादधात्। तानसुराञ्जेतुं स इन्द्रो वेषान्तरं कृत्वा ब्राह्मणः अहमिति ब्रुवाणः तन्मध्ये प्रविश्य काचित् इष्टकामुपाधत्त। तदानीं मनसि एषा मे मदीयेष्टका चित्रा इति नामधेयेन युक्ताऽपेक्षितविचित्रफलप्रदातृत्वात् इति अमन्यत। तेन चाभिचयनेनासुराः स्वर्गमारोढुं प्रारभन्त। तदानीं स इन्द्रः स्वकीयां ताम् इष्टकां [आवृहत्] चितेरुद्धृतवान्। चितिभ्रंशेन मार्गमध्य एवासुराः [अवाकीर्यन्त] प्रभ्रष्टाः। ते चोर्णनाभिनामकाः लूताः कीटाः अभवन्। तेन कीटेन संसृष्टं तन्तुजालमूर्णशब्देनोच्यते। ऊर्णां तस्मिन्नूर्णे सूत्रजाले स्थिता अभयो भीतिरहिता आस्ते। ते खाधारयोः काष्ठयोर्मध्य आकाशे तन्तुजालं सृष्ट्वा तत्र निर्भयाश्चिरन्तीत्येतत्सर्वं लोकप्रसिद्धम्। ऊर्णावभयः इति पदद्वयं मिलित्वैकं नामधेयम्। अपांनपादिति पदद्वयं यथैकस्यापेनाम तद्वत्। तेषामसुराणां मध्ये द्वौ असुरौ श्रद्धातिशयात्स्वर्गं प्राप्य चितिभ्रंशात्तत्र देवलोके श्वानौ अभूताम् यस्मादेवेन्द्रश्चिन्वेष्टकापातेन तानसुरान्विनाशितवान्। तस्माद्यजमानश्चित्रानक्षत्रे अग्निम् आधाय भ्रातृव्यान्विनाश्य स्वस्मिन्नोज आदिकं स्थापयति। ओजः बलहेतुरष्टमो धातुः। बलं प्रसिद्धम्। इन्द्रियं चक्षुरादिकम्। वीर्यं तदीयव्यवहारपाटवम्॥

१ तै. सं. ४. ४. १०. । २ तै. सं. ४. ४. १०. ।

काम् । स इन्द्रो ब्राह्मणो ब्रुवाण इष्टकामुपाधत्त । एषा मे चित्रा नामेति । ते सुवर्गं लोकमाप्रारोहन् । स इन्द्र इष्टकामावृहत् । तेऽवाकीर्यन्त । येऽवाकीर्यन्त । त ऊर्णावभयोऽभवन् । द्वावुदपतताम् (५) । तौ दिव्यौ श्वानावभवताम् । यो भ्रातृव्यवान्त्स्यात् । स चित्रायामग्निमादधीत । अवकीर्यैव भ्रातृव्यान् । ओजो बलमिन्द्रियं वीर्यमात्मन्धत्ते ॥ वसन्ता ब्राह्मणोऽग्निमादधीत । वसन्तो वै ब्राह्मणस्यर्तुः । स्व एवैनमृतावाधाय । ब्रह्मवर्चसी भवति । मुखं वा एतदृतूनाम् (६) । यद्वसन्तः । यो वसन्ताऽग्निमाधत्ते । मुख्य एव भवति । अथो योनिमन्तमेवैनं प्रजातमाधत्ते ॥ ग्रीष्मे राजन्य आदधीत । ग्रीष्मो वै राजन्यस्यर्तुः । स्व एवैनमृतावाधाय । इन्द्रियावी भवति ॥ शरदि वैश्य आदधीत । शरद्वै वैश्यस्यर्तुः (७) । स्व एवैनमृतावाधाय । पशुमान्भवति । न पूर्वयोः फल्गुन्योरग्निमादधीत । एषा वै जघन्या रात्रिः संवत्सरस्य । यत्पूर्वे फल्गुनी । पृष्ठित एव संवत्सरस्याग्निमाधाय । पापीयान्भवति ॥ उत्तरयोरादधीत । एषा वै प्रथमा रात्रिः संवत्सरस्य । यदुत्तरे फल्गुनी । मुखत एव संवत्सरस्याग्निमाधाय । वसीयान्भवति ॥ अथो खलु । यदेवैनं यज्ञ उपनमेत् । अथाऽऽदधीत । सैवास्यर्द्धिः (८) ॥

सर्वाभिस्तन्नु फल्गुन्योरग्निमादधीतासन्नमतवामृतूनां वैश्यस्यर्तुस्तरे फल्गुनी पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

---

(९) इत्थं नक्षत्राणि विधायाधिकारिविशेषादृतून्विधत्ते—(वसन्तेति) ।वसन्तः वसन्तर्तुस्तस्य च ब्राह्मणस्य चायम्यसाम्यात्स्वस्याग्निभावात्स्वकीय ऋतावादधानस्य ब्राह्मणस्य च सोचितं ब्रह्मवर्चसमेव फलम् । किंच 'मधुश्च माधवश्च वासन्तिकावृतू' इत्याम्नानान्मुखत्वं प्राथम्यं वसन्तस्यावगन्तव्यम् । अपि च यथा स्त्रीणामृतुविशेषे प्रवृत्त पुरुष प्रजननसमर्थो भवति तथर्तुविशेषे योनिमन्तं प्रजननसामर्थ्यवन्तो भावुर्भूतं प्रजातं चाभिमायत्ते । एवं ग्रीष्मशरद्वाक्ययोरपि व्याख्येयम् ॥

(१०) पूर्वं काम्य आधाने पूर्वोत्तरफल्गुनीनक्षत्रद्वयं विहितम् । इदानीं नित्य आधाने नक्षत्रमेकं निषिध्येतरद्विधत्ते—(न पूर्वयोरिति-) फाल्गुनमासे येयं पूर्णिमा तत्र आद्यं यत्पूर्वफल्गुनीनक्षत्रं तद्युक्ता रात्रिः पूर्वसंवत्सरस्य समाप्तिस्थानीया । अतस्तत्राऽऽदधानः संवत्सरस्य पृष्ठितः पृष्ठभागेऽनुष्ठानाद्धीनो भवति । उत्तरफल्गुनीनक्षत्रे भाविसंवत्सरादित्वात्तत्राऽऽदधानः संवत्सरप्रारम्भ एवाऽऽधायाल्लन्तबलिको भवति ।

(११) पक्षान्तरं विधत्ते—(अथो खल्विति) अन्येऽभिज्ञा एवमाहुः यत्तु यस्मिन्नेव काल एनं पुरुषं सोमयज्ञः [ उपनमेत् ] प्राप्नुयात्सोमयागं करिष्याम्यहमिति बुद्धिरुदियात्तदानीमेव आदधीत । न तु नक्षत्रादिकं परीक्षितव्यम् । सैव सोमयागबुद्धिरेव अस्य पुरुषस्य नक्षत्रादिरूपत्वविहितकालसमृद्धि । अत एव सूत्रकारेणोक्तम्—"सोमेन यक्ष्यमाणो नर्तुं सूर्क्षेत नाप्तम्" इति ॥

अत्र मीमांसा-तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—"आधानं किं क्रत्वर्थं वह्निमात्रेण वा युतम् । नैष्कृत्यग्निप्रजायैतदर्थमेतत्क्रतौ स्थितम् ॥ लौकिकाग्नावमात्रत्वे विफलत्वात्क्रतौ श्रुतिः । यथासाऽऽहवनीयादौ

---

१ तै. सं. ४. ४. ११. । २ आप. श्रौ. सू. ५. ३. २१. ।

शास्त्रीयेऽस्तु स्वतन्त्रता" ॥ अनारभ्याधीतं पर्णमयीत्वं यथा जुहूप्रनाड्या प्रकृतौ निविष्टम्, तथैवाग्निप्रनाड्या तत्संस्काररूपमाधानं प्रकृतौ निविशत इति चेत्। नैवम्। वैषम्यात्। द्विविधो हि जुह्वा आकारः। लौकिकः शास्त्रीयश्च। अरत्निमानदैर्घ्यहंसमुखत्वाग्बिलत्वादिरूपो दृश्यमानो लौकिकः। अपूर्वीयत्वाकारस्तु शास्त्रीयः। तयोरपूर्वीयत्वं क्रतुप्रवेशमन्तरेण नास्ति। तेन च यदि लौकिकाकारमात्रे पर्यवसेत्तदा पर्णमयीत्वं विफलं भवेत्। काष्ठान्तरेणापि तदाकारस्य सुसंपादत्वात्। अतोऽपूर्वीयत्वाय पर्णता क्रतौ प्रविष्टा। आहवनीयादीनां त्वेक एव शास्त्रीयाकारः। स च विधिबलादाधानेनैव जन्यते नान्यथा। तस्मादाधानस्य क्रतुप्रवेशं विनैव शास्त्रीयाहवनीयाद्याकारसंपादनसमर्थत्वादग्निद्वारेण तत्सयुज्यते। तथा सति पर्णवैषम्यात्प्रकृतावप्रविश्याग्नीनुत्पाद्य क्रतुपरत्वात्- न्येणावतिष्ठते। ततो लौकिकोपायसंपादितसुवर्णमीढादिवदाधानसंपादितानां स्वतन्त्राणामेवाऽऽहवनीयाद्यग्नीनां पश्चाद्वाक्यैः क्रतुषु विनियोगोऽस्तु" ॥

तत्रैवान्यच्चिन्तितम्—"आधानं पवमानादीष्टिरङ्गं न वा भवेत्। अग्नीनामिष्टिक्षेपत्वात्तद्वाराऽस्य तदङ्गता ॥ अनारभ्य विधानात्तु नाङ्गं यस्यचिदाहिति। अग्न्यर्थत्वात्तत्समेष्टिरप्ययस्त्वग्निहोत्रगा" ॥ इदमाम्नायते—"अग्नये पवमानाय पुरोडाशमष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये' इति। "वसन्ता ब्राह्मणोऽग्निमादधीत" इति च। तत्राधानं पवमानादीनामिष्टीनामङ्गं भवेत्। कुतः। दर्शपूर्णमासविकृतिषु पवमानादीष्टिषु चोदकप्राप्तानामाहवनीयाद्यग्नीनामिष्ट्यङ्गत्वे सत्यग्निद्वारा तत्संस्काररूपस्याऽऽधानस्यापि तदङ्गताया अनिवार्यत्वादिति चेत्। नैवम्। न ह्येतदाधानं कस्यचित्क्रतोः प्रकरणे पठितं किंत्वनारभ्याधीतम्। अतो न कस्याप्येतदङ्गम्। किंत्वाधानविहितानामप्यग्नीनां संस्कारार्थत्वात्परस्परं नाङ्गाङ्गिभावशङ्का। ननु पवमानेष्ट्यङ्गत्वाभावेऽग्निसंस्कारवैयर्थ्यादग्निहोत्रे तदङ्गत्वं युक्तमिति चेत्। न। संस्कृतानामग्नीनामग्निहोत्राद्युत्तरक्रतुषु तत्तद्वाक्यैर्विनियोगावगमात्। तस्मात्स्वतन्त्रमाऽऽधानम् ॥

द्वितीयाध्यायस्य तृतीयपादे चिन्तितम्। "वसन्ते विप्र आदध्यात्तत्रैवोपनयीत तम्। अनुवादः प्राप्य वाऽनुवादः कालसिद्धये ॥ अन्तरेणाग्निविद्याभ्यां कर्मानुष्ठित्यसंभवात्। क्लृप्ते आधानोपनीती प्राप्ता विप्रादयस्ततः ॥ लौकिकाग्नेः पुस्तकाच्च तत्सिद्धेर्नास्ति कल्पनम्। कालविप्रादियुक्तमतोऽप्राप्तं विधीयते"। "वसन्ते ब्राह्मणोऽग्निमादधीत। ग्रीष्मे राजन्यः। शरदि वैश्यः" इति श्रूयते। "वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं शरदि वैश्यम्" इति च। तत्र वसन्तादिकालविशेषं विधातुं ब्राह्मणादयोऽनूद्यन्ते। न च तेषां प्राप्त्यभावः। कर्त्वनुष्ठानान्यथानुपपत्त्या क्लृप्तत्वात्। न ह्यनुष्ठानाधारभूतमग्निमनुष्ठानप्रकारज्ञापिकां विद्यां च विना कर्मानुष्ठानं संभवति। अग्निश्च नाऽऽधानमन्तरेणास्तीति ब्राह्मणादिकर्तृकमाधानं कल्पयति, विद्या चोपनयनपूर्वकाध्ययनमन्तरेण न संभवतीति ब्राह्मणाद्युपनयनं कल्पयतीति तत्प्राप्तिरिति चेत्। नैवम्। लौकिकाग्नौ होतुं पुस्तकपाठेनाधिगन्तुं च शक्यत्वेनाऽऽधानोपनयनयोरकल्पने ब्राह्मणादीनामप्राप्तेः। तस्माद्वसन्तादिकालविशिष्टे ब्राह्मणादिकर्तृके आधानोपनयने अत्र विधीयेते ॥

षष्ठाध्यायस्य प्रथमपादे चिन्तितम्—"पुंसोरेकस्य वाऽऽधानं यजमानावितीरितौ द्वयोः। एष क्षौमविधिर्द्विस्व दम्पत्योरेकता ततः" ॥ आधाने श्रूयते—"क्षौमे वसानावग्निमादधीयाताम्' इति। तत्र वसानाविति पुंलिङ्गद्विवचनादुभयोः पुंसोराधानेऽधिकार इति चेत्। नैवम्। क्षौमस्याप्राप्तस्य विधेयतया पुंद्वित्वस्यापि विधाने वाक्यभेदान्न तद्विधीयते। किंतु दम्पत्योः सहाधिकारेण प्राप्तं द्वित्वमनूद्यते। पतिश्च पत्नी चेति विगृह्य पतिशब्दस्यैकशेषात्पुंलिङ्गद्विवचनमविरुद्धम्। तस्मादाधानेऽधिकारिणं पुंस एकत्वमेव ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

१ 'तत्र' इति पाठः। २ 'पर्यवस्यति। तदा' इति पाठः। ३ सुसंपादत्वात् इति पाठः। ४ 'अग्निहोत्रेण' इति पाठः। ५ जै न्या मा २ ३ ४। ६ तै सं २ २ ४। ७ 'अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये इति। वसन्ते ब्राह्मणोऽग्नीनादधीत' इति पाठः। ८ तै ब्रा १ १ २। ९ '०मिष्टीनामङ्गम्। कुतः' इति पाठः। १० 'अग्निद्वाराऽङ्गत्वं युक्तम्' इति पाठः। ११ जै न्या मा. २ ३ ३। १२ तै ब्रा १ १ २.। १३ 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इति पाठः। १४ 'अन्तरेणासमवन्ती ब्राह्मणाद्युपनयनं कल्पयतीति तत्र प्राप्ति' इति पाठः। १५ आप श्रौ सू. ५ ४. १०.।

अथ प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥

[12]उद्धन्ति । यदेवास्या अमेध्यम् । तदपहन्ति । [13]अपोऽवोक्षति शान्त्यै ॥ [14]सिकता निवपति । एतद्वा अग्नेर्वैश्वानरस्य रूपम् । रूपेणैव वैश्वानरमवरुन्द्धे ॥ [15]ऊषान्निवपति । पुष्टिर्वा एषा प्रजननम् । यदूषाः ( १ ) । पुष्ट्यामेव प्रजननेऽग्निमाधत्ते । अथो संज्ञान एव । संज्ञानꣳ ह्येतत्पशूनाम् । यदूषाः । [16]द्यावापृथिवी सहाऽऽस्ताम् । ते वियती अब्रूताम् । अस्त्वेव नौ सह यज्ञियमिति । यदमुष्या यज्ञियमासीत् । तदस्यामदधात् । त ऊषा अभवन् ( २ ) । यदस्या यज्ञियमासीत् । तदमुष्यामदधात् । तददश्चन्द्रमसि कृष्णम् । ऊषान्निवपन्नदो

(१२) द्वितीयानुवाके आधानार्थे नक्षत्रादिकालोऽभिहितः । तृतीये देवयजनार्थाः सम्भारा उच्यन्ते । यदुक्तं सूत्रकारेण—"प्राचीनप्रवणं देवयजनमुद्धत्य" इति तदिदं विधत्ते—(उद्धन्तीति–) भूमेरूर्ध्वभागं खनित्रादिना खनेत् । तेन निष्ठीवनादिजनितं यदमेध्यं तत् अपहृतं भवति । उद्धननमन्त्रस्तु "उद्धन्यमानम्" इत्यादि । स चोपरितनप्रपाठकादावाम्नातत्वात्तत्रैव व्याख्यास्यते । एवमुत्तरेष्वपि विधिषु द्रष्टव्यम् ॥

(१३) अथ विधत्ते—(अपो ऽवोक्षतीति–) उद्धननकृतां भूमेर्वेदनां जलेन शाम्यति । 'आपो वै शान्ता' इत्यब्भ्यो शमहेतुत्वश्रवणात् ॥

(१४) विधत्ते—(सिकता इति–) सिकतानां तद्रूपत्वं 'वैश्वानरस्य रूपम्' इति मन्त्रादवगन्तव्यम् । सिकतादयो द्रव्यविशेषा देवयजनाख्यभूमौ प्रक्षेपणीयाः सम्भाराः । अत एव सूत्रकारेणोक्तम्—'सम्भारान् पार्थिवान्वनस्पत्यान्' इति । तत्र पार्थिवेषु सिकतारूप एकः सम्भार उक्तः ॥

(१५) द्वितीयं सम्भारं विधत्ते—(ऊषानिति–) पशवो लूपरक्षेत्रोत्पन्नं तृणादिकं रसान्तरयुक्तत्वादादरेण भक्षयित्वा पुष्टा सन्तोऽपत्यान्युत्पादयन्ति । तस्मात् ऊषाः लवणाम्भसा मिश्रिता भूम्यवयवाः इति यावत् । सा एषा पुष्टिः प्रजननं च तत्सादृश्यविवक्षया तदुभयप्राप्तिः । अपि च संज्ञाने प्रदेश एवाभिराहितो भवति । एतत् चोपरक्षेत्रं पशूनां संज्ञानम् । पशवो घ्राणेन तत्सम्यग् जानन्ति । तस्मादूषाः आधानस्य स्थाने निवपनीयाः ॥

(१६) एतन्निवपनकाले ध्यानविशेषं विधत्ते—(द्यावापृथिवी इति–) सृष्टिकाले द्यावापृथिव्यौ सम्यगन्तरिक्षव्यवधानरहिते अभूताम् । तदा प्राणिनामवकाशाय वीश्वरानुज्ञया परस्परवियोगं गते, वियोगकाले च स्नेहातिशयात्परस्परमेवम् अब्रूताम् आवयोर्यज्ञयोग्यं यत्सारमस्ति तत् सह एव तिष्ठतु । भूलोकस्य दिवो वियोगो मा भूत् द्युलोकस्य च भूमेर्वियोगो मा भूदिति । तत अमुष्याः दिवः सम्बन्धि यत् यज्ञियं सारं तदस्यां पृथिव्यां सा द्यौरस्थापयत् । ते च द्युलोकसाराः एते दृश्यमाना भूम्यवयवाः [ऊषा] ऊषरूपा अभवन् । तस्याः पृथिव्याः यत् यज्ञियं सारम् आसीत् तदमुष्यां दिवि भूमिरस्थापयत् । तत् च स्थापितं भूसारम् अदो दृश्यमानं चन्द्रमसि कलङ्करूपं कृष्णम् । तस्माद्भूसारत्वादूषाणां निवपनकाले तत्कृष्णरूपमत्र तिष्ठतीति ध्यायेत् । तथा सति द्युलोकसम्बन्धिन्यूषे भूलोकसम्बन्धिनि कृष्णे चाग्निराहितो भवति ॥

१ आ श्रौ सू. ५ ४ १ । २ तै ब्रा १ २ १ । ३ तै सं ५. १ ५ । ४ तै ब्रा. १ २ १ । ५ सिकताश्च तदनुसारं आखुवल्मीकमित्यपि । सूद वराहविहत शर्करा अश्मानो नयेत् । अश्वत्थ, औदुम्बर, पलाश, शमी, वैकङ्कत, अशनिहतो वृक्ष, पुष्करम् इत्यादिशब्दप्रसङ्गानि । ६ आप श्रौ सू. ५. १ ४. ।

ध्यायेत् । द्यावापृथिव्योरेव यज्ञियेऽग्निमाधत्ते ॥ अग्निर्देवेभ्यो निलायत । आखुरूपं कृत्वा । स पृथिवीं प्राविशत् । स ऊतीः कुर्वाणः पृथिवीमनु समचरत् । तदाखुकरीषमभवत् ( ३ ) । यदाखुकरीषꣳ संभारो भवति । यदेवास्य तत्र न्यक्तम् । तदेवावरुन्धे ॥ ऊर्जं वा एतꣳ रसं पृथिव्या उपदीका उद्दिहन्ति । यद्वल्मीकम् । यद्वल्मीकवपा संभारो भवति । ऊर्जमेव रसं पृथिव्या अवरुन्धे । अथो श्रोत्रमेव । श्रोत्रꣳ ह्येतत्पृथिव्याः । यद्वल्मीकः ( ४ ) । अबधिरो भवति । य एवं वेद ॥ प्रजापतिः प्रजा असृजत । तासामन्नमुपाक्षीयत । ताभ्यः सूदमुपप्राभिनत् । ततो वै तासामन्नं नाक्षीयत । यस्य सूदः संभारो भवति । नास्य गृहेऽन्नं क्षीयते ॥ आपो वा इदमग्रे सलिलमासीत् । तेन प्रजापतिरश्राम्यत् ( ५ ) । कथमिदꣳ स्यादिति । सोऽपश्यत्पुष्करपर्णं तिष्ठत् । सोऽमन्यत । अस्ति वै तत् । यस्मिन्निदमधितिष्ठतीति । स वराहो रूपं कृत्वो-

---

(१७) अथ तृतीयं संभारं विधत्ते—(अग्निर्देवेभ्य इति–) अग्निः कदाचित्केनापि निमित्तेन देवेभ्य अपरक्तः सन्मूषको भूत्वा तदीयं रूपं च संपूर्णं कृत्वा निलीनो देवैरदृष्टो भूत्वा स्वः च पृथिवीं प्रविष्टो बिलानि कुर्वाणः अनु क्रमेण भूमेरन्तरेव समचरत् । यद्बिलनिर्माणे निःसारितं पांसुरूपं तत् एतत् आखुकरीषम् । तस्मिन्संभृते सति तत्र निगूढं यदग्नेस्तेजः तत् सर्वं प्राप्नोति ॥

(१८) अथ चतुर्थं संभारं विधत्ते—(ऊर्जमिति–) उपदीकाः पिपीलिकासमाना आर्द्रीकृतमृत्तिकोपचयक्षमा जन्तवस्ते हि पृथिव्याः संबन्धिनमूर्क्शब्दाभिधेयं रसं पृथिव्याः सकाशादूर्ध्वमानीयोपचिन्वन्ति तत्संभारेण भूसारं प्राप्नोति । अपि च श्रोत्रेन्द्रियसामर्थ्यमपि प्राप्नोति । वल्मीकस्य पृथिवीश्रोत्रत्वात् ॥

(१९) एतद्वेदनं प्रशंसति—(अबधिर इति–) ॥

(२०) अथ पञ्चमं संभारं विधत्ते—(प्रजापतिरिति–) पुरा कदाचित् प्रजापतिः सृष्टानां प्रजानां यत् अन्नं तद्भुज्यमानमुपक्षीणमभूत् । ततः प्रजार्थं सूदम् अशोष्यजलप्रदेशावस्थितं कर्दममुपानीय प्राभिनत् । तेषु तेषु पृथिवीप्रदेशेषु पृथक्पृथक्प्रसारितवान् । ततः तत्र तत्र सस्योत्पत्तौ सत्यां तासां प्रजानाम् अन्नम् अक्षीणमभूत् । अतस्तत्संभारेण गृहेऽन्नम् अक्षयं भवति ॥

(२१) अथ षष्ठं संभारं विधत्ते—(आपो वा इति–) इदम् इदानीं दृश्यमानं गिरिनदीसमुद्रादिकं स्थावरं मनुष्यपश्वादिकं जङ्गमं च सृष्टेः पूर्वमीदृशं नाऽऽसीत् । किं तु सलिलरूपम् आसीत् । 'षल गतौ' औणादिक इलच् । इदं दृश्यमानं जगत्सलिलं कारणेन संगतमविभागापन्नम् । यद्वा "इमे वै लोकाः सरिरम्" इति श्रुतेः सरिरशब्देन लोका उच्यन्ते । रलयोरभेदात्सलिलरूपमासीत्तत्राप्यापः एव न [illegible] भूमिस्वरूपम् । तदानीं प्रजापतिः तेन सिसृक्षितजगन्निमित्तेन अश्राम्यत् । पर्यालोचनरूपं तपोऽकुरुत । कथं नाम इदं सर्वं जगद्भवेत् इति विचार्य तस्य सलिलस्य मध्ये दीर्घनालमेकमवस्थितमेकं पद्मपत्रमपश्यत् । तच्च दृष्ट्वा मनस्येवमतर्कयत्— यस्मिन् आधारे इदं सनालं पद्मपत्रम् अधिश्रित्य तिष्ठति तद्वस्तु किंचिदधस्तादस्त्येव इति तर्कयित्वा च सः प्रजापतिः वराहो भूत्वा तदीयं रूपं च सम्यक् कृत्वा तस्य पद्मपत्रनालस्य समीपे जलमध्ये निमग्नोऽभूत् । मग्नश्चासावधस्ताद्भूमिं प्राप्तवान् । तस्याः भूमेः सकाशात्किंचिन्मृदमादाय इदं स्वदंष्ट्रया पृथक्कृत्य सलिलस्योपर्युन्मज्जनं कृतवान् । तत् च मृद्रूपं तस्मिन् पुष्करपर्णे प्रसारितवान् । यस्मादियं मृत्तिका प्रथिता तस्मात्पृथिवीनाम संपन्नम् । ततः संतुष्ट इदं स्थावरजङ्गमाधारभूतं वस्तु अभूदिति उवाच । ततो भवतीति व्युत्पत्त्या

पुन्यमज्जत् । स पृथिवीमध आच्छैत् । तस्या उपहत्योदमज्जत् । तत्पुष्करपर्णेऽप्रथयत् । यदप्रथयत् (६) । तत्पृथिव्यै पृथिवित्वम् । अभूद्वा इदमिति । तद्भूम्यै भूमित्वम् । तां दिशोऽनु वातः समवहत् । ताꣳ शर्कराभिरदृꣳहत् । शं वै नोऽभूदिति । तच्छर्कराणाꣳ शर्करत्वम् । यद्वराहविहतꣳ संभारो भवति । अस्यामेवाच्छम्बट्कारमग्निमाधत्ते । शर्करा भवन्ति धृत्यै (७) । अथो शन्त्वाय ॥ [२२]सरेता अग्निराधेय इत्याहुः । आपो वरुणस्य पत्नय आसन् । ता अग्निरभ्यध्यायत् । ताः समभवत् । तस्य रेतः पराऽपतत् । तद्धिरण्यमभवत् । यद्धिरण्यमुपास्यति । सरेतसमेवाग्निमाधत्ते । [२३]पुरुष इत्वै स्वाद्रेतसो बीभत्सत इत्याहुः (८) । उत्तरत उपास्यत्यबीभत्सायै ॥ [२४]अति प्रयच्छति । आर्तिमेवातिप्रयच्छति ॥ [२५]अग्निर्देवेभ्यो निलायत । अश्वो रूपं कृत्वा । सोऽश्वत्थे संवत्सरमतिष्ठत् । तदश्वत्थस्याश्वत्थत्वम् । यदाश्वत्थः संभारो भवति । यदेवास्य तत्र न्यक्तम् । तदेवावरुन्द्धे ॥ (९) [२६]देवा वा ऊर्जं व्यभजन्त । तत उदुम्बर उदतिष्ठत् । ऊर्ग्वै

---

भूमिनाम संपन्नम् । ताम् आर्द्रां भूमिम् अनुलक्ष्य शोषयितुं चतस्रो दिशः अनु प्रजापतिसंकल्पाद्वायुः स प्रहृतः । क्षुभ्यन्तीं तां भूमिं च प्रजापतिः शर्कराभिः क्षुद्रपाषाणैः [अदृंहत्] दृढीचकार । कृत्वा च नः अस्माकं शं सुखम् अभूत् इति उवाच । तस्मात्कारणाच्छं सुखं कृतमाभिरिति व्युत्पत्त्या शर्करेति नाम संपन्नम् । यस्माद्वराहेणाऽऽनीताया मृद ईदृशो महिमा तस्मात् [वराहविहतम्] वराहेण भूमौ विहतं खनितमस्यां मृत्स्वरूपं संभरणीयम् । तथा सति अस्यां भूम्यामेव वैयर्थ्यं यथा न भवति तथाऽग्निमाधत्ते । यस्माच्छर्कराभिर्भूमिर्दृढीकृता तस्मादत्रापि धृत्यै दार्ढ्याय शर्कराः प्रक्षेप्तव्याः, अथो अपि च शंत्वाय सुखसिद्धये शर्कराः कार्याः ॥

(२२) अथ सप्तमं संभारं विधत्ते—(सरेता इति-) या अब्देवता वरुणस्य भार्याः, ताः कामुकः अग्निः ध्यात्वा [समभवत्] संभोगं कृतवान् । तदानीं च्यवमानं तस्य रेतः भूमौ पतित्वा हिरण्यम् अभूत् । अतोऽत्र हिरण्ये प्रक्षिप्ते सति सरेतस्कोऽग्निराहितो भवति ॥

(२३) एतस्य हिरण्यस्य प्रक्षेपस्थानं विधत्ते—(पुरुष इति-) इत्वै इति निपातत्रयं मिलित्वा प्रसिद्धिमाचष्टे[२] । लोके सर्वोऽपि पुरुषः स्वकीयं रेतो दृष्ट्वा स्वकं जुगुप्सते । सरेतस्कमिदम् इति अभिज्ञा आहुः । तस्मादग्निस्थापनप्रदेशं विहायोत्तरस्मिन्पार्श्वे हिरण्यं प्रक्षिपेत् । तच्च अबीभत्सायै संपद्यते ॥

(२४) यदुक्तं सूत्रकारेण—"द्वेष्याय रजतं प्रयच्छति"[१] इति । तदिदं विधत्ते—(अति प्रयच्छतीति-) देवयजने प्रक्षिप्तं सुवर्णम् अतिक्रम्यान्यद्रजतं प्रयच्छेत् । तथा सति स्वात्मानम् अतिक्रम्यान्यस्मै द्वेष्याय स्वकीयाम् आर्तिम् दत्तवान्भवति ॥

(२५) तदेवं पार्थिवाः संभारा विहिताः । अथ वानस्पत्येषु सप्तसु संभारेषु प्रथमं संभारं विधत्ते—(अग्निरिति-) कदाचित् अग्निर्देवेभ्यः अपक्रम्य अश्वः भूत्वा तदीयं रूपं स्वस्य कृत्वा अश्वत्थे निरूढः संवत्सरमात्रम् अतिष्ठत् । अश्वस्तिष्ठत्यस्मिन्निति व्युत्पत्त्या तस्य वृक्षस्याश्वत्थनाम संपन्नम् । तस्मादश्वत्थसंभारेण तत्र निरूढमग्नेस्तेजः प्राप्नोति ॥

(२६) द्वितीयं संभारं विधत्ते—(देवा वा ऊर्जमिति-) देवाः सर्वे कदाचिदेकत्रोपविश्यान्नरसं विभजन्तस्तदा तस्मिन्स्थाने पतितादन्नरसात् उदुम्बरवृक्ष उदतिष्ठत् । तस्मादन्नरसात्मोदुम्बरस्तत्संभारेणान्नरसं प्राप्नोत्येव ॥

---

१ आप. श्रौ. सू. ५. १०. ४. । २ इत्-उ-वै इति छेदः ।

उदुम्बरः । यदौदुम्बरः संभारो भवति । ऊर्जमेवावरुन्धे ॥ तृतीयस्यामितो दिवि सोम आसीत् । तं गायत्र्याहरत् । तस्य पर्णमच्छिद्यत । तत्पर्णोऽभवत् । तत्पर्णस्य पर्णत्वम् । ( १० ) यस्य पर्णमयः संभारो भवति । सोमपीथमेवावरुन्धे । [1]देवा वै ब्रह्मन्नवदन्त । तत्पर्ण उपाशृणोत् । सुश्रवा वै नाम । यत्पर्णमयः संभारो भवति । ब्रह्मवर्चसमेवावरुन्धे ॥ प्रजापतिरग्निमसृजत । सोऽबिभेत्प्र मा धक्ष्यतीति । तꣳ शम्याऽशमयत् । ( ११ ) तच्छम्यै शमित्वम् । यच्छमीमयः संभारो भवति । शान्त्या अप्रदाहाय ॥ अग्नेः सृष्टस्य यतः । विकङ्कतं भा आर्च्छत् । यद्वैकङ्कतः संभारो भवति । भा एवावरुन्धे ॥ सहृदयोऽग्निराधेय इत्याहुः । मरुतोऽद्भिरग्निमतमयन् । तस्य तान्तस्य हृदयमाच्छिन्दन् । साऽशनिरभवत् । यदशनिहतस्य वृक्षस्य संभारो भवति । सहृदयमेवाग्निमाधत्ते ( १२ ) ॥

ऊर्जं अभवदभवदुदुम्बरीकोऽशाम्यदमथ्यदुदूर्ध्वं बीभत्सत इत्याह रुन्धे पर्णत्वम्-
शमयदच्छिन्दन्त्रयोदश च ॥ ३ ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

(२७) अथ तृतीयं संभारं विधत्ते—(तृतीयस्यामिति-) इतः भूलोकादारभ्य गणनायामन्तरिक्षमतिक्रम्य परतो वर्तमाना या द्यौस्तृतीया तस्यां सोमवल्ली स्थिता । तं च सोमं गायत्री देवता तद्रक्षैः सोमरक्षकैः सह युद्धं कृत्वा समाऽऽहरत् । अयं च वृत्तान्तः "कद्रूश्च वै सुपर्णी च" इत्यनुवाके प्रपञ्चितः । तदा समानीयमानस्य तस्य सोमस्यैकं पर्णं छिन्नं सद्भूमौ पतित्वा पलाशवृक्षः अभवत् । पर्णजन्यत्वात्तस्य वृक्षस्य पर्णनाम संपन्नम् । सोमजन्यस्य तस्य संभरणेन सोमपानम् एव प्राप्नोति ॥

(२८) पुनरपि तमेव संभारं प्रशंसति—(देवा इति-) देवाः कदाचिदेकान्ते पलाशवृक्षच्छायायामुपविश्य परस्मिन्ब्रह्मणि संवादं कृतवन्तः । तत् सर्वं समीपे स्थितः पलाशवृक्षः अशृणोत् । शोभनं वस्तु श्रुतवानिति व्युत्पत्त्या सुश्रवा इति नाम संपन्नम् । तस्मात्परं ब्रह्म श्रुतवतो वृक्षस्य संभरणेन ब्रह्मवर्चसमेव प्राप्नोति ॥

(२९) अथ चतुर्थं संभारं विधत्ते—(प्रजापतिरिति-) प्रजापतिरग्निं सृष्ट्वा मामयमग्निः प्रधक्ष्यतीति भीतः शमीशाखया ज्वालाम् अशमयत् । शमयत्यनेनेति व्युत्पत्त्या शमीति नाम संपन्नम् । अतस्तत्संभारः पूर्वं विद्यमानस्य दाहस्योपशान्त्यै, इतः परम् अप्रदाहाय च संपद्यते ॥

(३०) अथ पञ्चमं संभारं विधत्ते—(अग्नेरिति-) प्रजापतिना सृष्टोऽग्निस्त्वरया गच्छन्विकङ्कतवृक्षमपश्यत्तदा तदीयं तेजो वृक्षं प्राप्नोत् । अतस्तत्संभारे सति भा एव दीप्तिमेव प्रवरुन्धे ॥

(३१) अथ षष्ठं संभारं विधत्ते—(सहृदय इति-) मरुतः कदाचिदग्निना सह विरोधे सति तम् अग्निमद्भिरतमयन् ग्लानिं प्रापयन् । ततो निष्क्रियस्याग्नेः हृदयम् आच्छिन्दन् । तस्य हृदयमशनिरूपेणोदभूत् । तस्मात् अशनिहतस्य वृक्षस्य संभारेण सहृदयोऽग्निराहितो भवति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

---

१ तै. सं. ६. १. ६.

अथ प्रथमकाण्डे तृतीयप्रपाठके चतुर्थोऽनुवाकः ।

द्वादशसु विक्रामेष्वग्निमादधीत । द्वादश मासाः संवत्सरः । संवत्सरादेवैनमवरुध्याऽऽधत्ते । यद्द्वादशसु विक्रामेष्वादधीत । परिमितमवरुन्धीत । चक्षुर्निमित आदधीत । इयद्द्वादशविक्रामा३ इति । परिमितं चैवापरिमितं चावरुन्द्धे । अनृतं वै वाचा वदति । अनृतं मनसा ध्यायति । ( १ ) चक्षुर्वै सत्यम् । अद्रा३गित्याह । अदर्शमिति । तत्सत्यम् । यश्चक्षुर्निमितेऽग्निमाधत्ते । सत्य एवैनमाधत्ते ॥ तस्मादाहिताग्निर्नानृतं वदेत् । नास्य ब्राह्मणोऽनाश्वान्गृहे वसेत् । सत्ये ह्यस्याग्निराहितः ॥ आग्नेयी वै रात्रिः । ( २ ) आग्नेयाः पशवः ।

(३२) तृतीये देवयजनदेशे प्रक्षेप्तव्याः संभारा उक्ताः । अथ चतुर्थे तैः संभारैर्युक्तेष्वायतनेषु वह्न्याधानमभिधीयते । यदुक्तं सूत्रकारेण—"प्राचीनप्रवणं देवयजनमुद्धत्य तस्मिन्नुदीचीनवꣳशꣳ शरणं करोति तस्याग्रेण मध्यमं वꣳशं गार्हपत्यायतनं भवति तस्मात्प्राचीनमष्टासु प्रक्रमेषु ब्राह्मणस्याऽऽहवनीयायतनमेकादशसु राजन्यस्य द्वादशसु वैश्यस्य चतुर्विꣳशत्यामपरिमिते वा यावता वा चक्षुषा मन्यते तस्मान्नातिदूरमाधेय इति सर्वेषामविशेषेण श्रूयते" इति । तत्रैकं पक्षं विधत्ते—(द्वादशस्विति-) विक्रामः प्रक्रमः । स च द्विपदः । तथा चोक्तम्—"प्रक्रमो द्विपदस्त्रिपदो वा" इति । गार्हपत्यात् द्वादशसु विक्रामेषु समाप्तेष्वाहवनीयायतनं कृत्वा तत्र अग्निम् आदध्यात् । संख्यासाम्येन मासद्वारा [संवत्सरात्] संवत्सरबलात् एनम् अग्निम् अवरुध्य आधानं कृतवान् ॥

(३३) पक्षान्तरं विधत्ते—(यदिति-) द्वादशसु विक्रामेषु आधाने सति देशस्य पादेन परिमितत्वाफलमपि परिमितमेव भवति । तस्माद्देशो न पादेन परिमातव्यः । किंतु चक्षुषा दृष्ट्वा प्रायेणैतावान्देशो द्वादशविक्रामः संभवतीति निश्चित्य तत्र आदधीत । एवं सति पादेन परिमितत्वाभावात्परिमितदोषोऽपि न भविष्यति । चक्षुषा परिमितत्वात्तदीयगुणश्च भविष्यति । चाक्षुषनिश्चयद्योतनार्था प्लुतिः ॥

(३४) इममेव पक्षं पुनः प्रशंसति—(अनृतमिति-) वाङ्मनसयोरनृतविषयत्वमपि क्वचिद्दृष्टम् । चक्षुस्तु पुरोवर्तिवस्तुनो याथात्म्यमेव पश्यतीति तत्सत्यस्वरूपम् । अत एव लोकेऽपि दूरदेशागतान्तं पुरुषमुपागताः पृष्ट्वा किं त्वमेव दृष्टवानुत श्रुतवानसीत्येवं सत्यत्वनिश्चयाय पृच्छन्ति । विचारार्था प्लुतिः । सोऽप्यहमेव दृष्टवानस्मीति यदा ब्रूते तदा तत्सत्यमिति निश्चिन्वन्ति । तस्माच्चक्षुर्निमितस्य सत्यत्वात्सत्यदेशेऽग्निराहितो भवति । यत्तु लोके शुक्तिरजतादिदर्शनं, तच्च काचकामलादिदोषकृतमिति न कदाचिदपि चक्षुः सत्यं व्यभिचरति ॥

(३५) इदानीं प्रसङ्गादाहिताग्नेः कंचिद्धर्मं दर्शयति—(तस्मादिति-) यस्माच्चक्षुर्निमित्त येन सत्यभूते देशेऽयमग्निराहितः तस्मादाहिताग्निः सत्यमेव वदेत् । न तु अनृतम् । सत्यानृतयोरेकत्र विरोधात् । गृहस्थस्य गृहे ब्राह्मणस्यानश्नतो यो निवासः सोऽप्यनृतसमानः । तस्मात्तं ब्राह्मणं भोजयेदेव ॥

(३६) देशविशेषं विधाय कालविशेषं विधत्ते—(आग्नेयीति-) रात्रावग्नेः प्रकाशाधिक्यात् रात्रिः आग्नेयी । एतच्चाग्निहोत्रब्राह्मण एवोपपादितम्—"अग्निं वावाऽऽदित्यः सायं प्रविशति तस्मादग्निर्दूरान्नक्तं ददृशे" इति । अग्नेः पशुप्रदत्वात्पशूनामाग्नेयत्वम् । एतच्चाग्न्युपस्थानब्राह्मणे देवैरभिहितम्—"इममेवाग्निꣳ सत्राम, [illegible] नः स्तुतः पशून्पुनर्दास्यतीति । तेऽग्निमस्तुवन्स एभ्यः स्तुतो रात्रिया अध्यहरभिपशूनिरार्जत्" इति । एवमिन्द्रस्याहःसंबन्धो ब्राह्मणान्तरादवगन्तव्यः । तस्माद्रात्रौ गार्हपत्याधानेन पशूनाप्नोति । अहन्याहवनीयाधानेन इन्द्रियं प्राप्नोति ॥

१ द्रष्टव्य. १. ५. २ । २ तै. ब्रा. २. १. २. । ३ तै. सं. १. ५. १. ।
२ आ० प्र०

ऐन्द्रमहः । नक्तं गार्हपत्यमादधाति । पशूनेवावरुन्द्धे । दिवाऽऽहवनीयम् । इन्द्रियमेवावरुन्द्धे । अर्धोदिते सूर्ये आहवनीयमादधाति । एतस्मिन्वै लोके प्रजापतिः प्रजा असृजत । प्रजा एव तद्यजमानः सृजते । अथो भूतं चैव भविष्यच्चावरुन्द्धे ॥ (३) इडा वै मानवी यज्ञानूकाशिन्यासीत् । साऽशृणोत् । असुरा अग्निमादधत इति । तदगच्छत् । त आहवनीयमग्र आदधत । अथ गार्हपत्यम् । अथान्वाहार्यपचनम् । साऽब्रवीत् । प्रतीच्येषाꣳ श्रीरगात् । भद्रा भूत्वा पराभविष्यन्तीति । (४) यस्यैवमग्निराधीयते । प्रतीच्यस्य श्रीरेति । भद्रो भूत्वा पराभवति ॥ साऽशृणोत् । देवा अग्निमादधत इति । तदगच्छत् । तेऽन्वाहार्यपचनमग्र आदधत । अथ गार्हपत्यम् । अथाऽऽहवनीयम् । साऽब्रवीत् । (५) प्राच्येषाꣳ श्रीरगात् । भद्रा भूत्वा सुवर्गं लोकमेष्यन्ति । प्रजां तु न वेत्स्यन्त इति । यस्यैवमग्निराधीयते । प्राच्यस्य श्रीरेति । भद्रो भूत्वा सुवर्गं लोकमेति । प्रजां तु न विन्दते ॥ साऽब्रवीदिडा मनुम् ॥ तथा वा अहं तवाग्निमाधास्यामि । यथा प्र प्रजया पशुभिर्मिथुनैर्जनिष्यसे । (६) प्रत्यस्मिँल्लोके

(३७) अहन्यपि विशेषं विधत्ते—(अर्धोदित इति-) लोक्यतेऽवगम्यत इति व्युत्पत्त्या लोकशब्दः कालपरः । अर्धोदयकाले प्रजानां सृष्टत्वात्तत्राऽऽधानं प्रजार्थं भवति । अपि चोदयस्यासंपूर्णत्वात् भूतम् अतीतं रात्रिरूपं च भविष्यत् आगाम्यहः च इत्युभयं प्राप्तं भवति ॥

(३८) अथाऽऽधातव्यानामग्नीनां क्रमं निर्णेतुमाहवनीयस्य प्राथम्यं निराचष्टे—(इडाग्रमेति-) इडा नाम गोरूपा काचिद्देवता । सा च [मानवी] मनुसंबन्धिनी । तत्संबन्धश्च 'मानवी घृतपदी मैत्रावरुणी' इतीडोपाह्वानस्य ब्राह्मणे स्पष्टमाम्नातः —"मानवीत्याह मनुर्ह्येतामग्रेऽपश्यत्" इति । सा चेडा यज्ञानूकाशिनी यज्ञतत्त्वप्रकाशनसमर्था आसीत् । सा कदाचिदसुराणामग्न्याधानवार्तां श्रुत्वा द्रष्टुं गता । दृष्ट्वा मनोः पार्श्वे समागत्यैवमुवाच—असुराः प्रथमं पूर्वदिगवस्थितमाहवनीयमाधाय ततः पश्चिमदिगवस्थितं गार्हपत्यमाधाय दक्षिणदिगवस्थितमन्वाहार्यपचनं चाऽऽहितवन्तः । तथा चाऽऽधानक्रमेण कंचित्कालं धनिका भूत्वा पश्चाद्विनाशं प्राप्स्यन्ति । एतेषां पश्चिमाग्निपुरस्सरत्वेन प्रवृत्तत्वात् एषां श्रीः अपि प्रतीची प्रतिकूलगमना सती तेभ्योऽसुरेभ्यो निर्गमिष्यत इति । अतोऽसुरवदिदानींतनस्याऽऽहिताग्नेरप्यन्ते पराभवो भवति ॥

(३९) अथान्वाहार्यपचनस्य प्राथम्यं निराचष्टे—(सेति-) पूर्ववद्व्याख्येयम् । अत्र गार्हपत्यादूर्ध्वं प्राङ्मुखप्रवृत्तेर्देवानां श्रीः अपि प्राची प्रवृत्ता । प्रकृष्टं पूर्वदिगवस्थितं स्वर्गमञ्चति गच्छतीति प्राची । तस्माद्देवानां स्वर्गप्राप्तिर्भविष्यति किं तु प्रजाहेतोर्गार्हपत्यस्य पूर्वमाधानाभावात् प्रजां न लप्स्यन्ते । एवं तादृगाधानकारिणि यजमानेऽपि द्रष्टव्यम् ॥

(४०) अथ गार्हपत्यस्य प्राथम्यं विधत्ते—(साऽब्रवीदिति-) गार्हपत्यस्य प्रजापशुस्वामित्वात्तस्य प्रथमाधानेन तत्प्राप्तिः । गार्हपत्यस्य दक्षिणभागे स्थितो योऽयमन्वाहार्यपचनस्तस्य तिर्यक्त्वेन वर्तमानस्योर्ध्वगमनाभावेन मनुष्यलोकसदृशत्वात्तदाधानेन मनुष्यलोके प्रतिष्ठा ततः ऊर्ध्वमाहवनीयाधानाय प्राङ्मुखप्रवृत्तेः स्वर्गस्य च प्राग्वर्तित्वात्तत्प्राप्तिः ॥

१ तै. सं. २.६.७ । २ 'अनन्तरं दक्षिणाग्निम्' इत्यधिकः पाठः । ३ 'के प्रतितिष्ठति त' इति पाठः ।

स्थास्यसि । अभि सुवर्गं लोकं जेष्यसीति । गार्हपत्यमग्र आदधात् । गार्हपत्यं वा अनु प्रजाः पशवः प्रजायन्ते । गार्हपत्येनैवास्मै प्रजां पशून्प्राजनयत् । अथान्वाहार्यपचनम् । तिर्यङ्ङिव वा अयं लोकः । अस्मिन्नेव तेन लोके प्रत्यतिष्ठत् । अथाऽऽहवनीयम् । तेनैव सुवर्गं लोकमभ्यजयत् । ( ७ ) यस्यैवमग्निराधीयते । प्र प्रजया पशुभिर्मिथुनैर्जायते । प्रत्यस्मिँल्लोके तिष्ठति । अभि सुवर्गं लोकं जयति ॥ यस्य वा अयथादेवतमग्निराधीयते । आ देवताभ्यो वृश्च्यते । पापीयान्भवति । यस्य यथादेवतम् । न देवताभ्य आ वृश्च्यते । वसीयान्भवति—भृगूणां त्वाऽङ्गिरसां व्रतपते व्रतेनाऽऽदधामीति भृग्वङ्गिरसामादध्यात् । आदित्यानां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीत्यन्यासां ब्राह्मणीनां प्रजानाम् । वरुणस्य त्वा राज्ञो व्रतपते व्रतेनाऽऽदधामीति राज्ञः । इन्द्रस्य त्वेन्द्रियेण व्रतपते व्रतेनाऽऽदधामीति राजन्यस्य । मनोस्त्वा ग्रामण्यो व्रतपते व्रतेनाऽऽदधामीति वैश्यस्य । ऋभूणां त्वा देवानां व्रतपते व्रतेनाऽऽदधामीति रथकारस्य—यथादेवतमग्निराधीयते । न देवताभ्य आवृश्च्यते । वसीयान्भवति ( ८ ) ॥

भ्यापूति रात्रिंश्चावरुन्द्धे भविष्यन्तीत्यसावीक्रान्तिर्यस्यैऽसावादृसीयान्भवति नवं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

(४१) अथाधिकारिभेदेनाऽऽधानमन्त्रविशेषान्विधत्ते—(यस्येति-)यस्य पुरुषस्य याऽभिमानिनी देवता तामनतिक्रम्याऽऽधानं तस्य पुरुषस्य यथादेवतम् इत्युच्यते । तदतिक्रमे सति देवताद्रोहो दारिद्र्यं च भवति । अनतिक्रमे तु देवताप्रसादो धनसंपत्तिश्च भवति । ये मनुष्या भृगुगोत्रोत्पन्ना ये चाङ्गिरोगोत्रोत्पन्नास्तेषामुभयेषां तत्प्रतिपादकेन भृगूणाम् इति मन्त्रेणाऽऽधानम् । हे व्रतपते ! कर्मस्वामिन्नग्ने ! भृगूणामङ्गिरसां च संबन्धिना व्रतेन कर्मविशेषेण निमित्तभूतेन त्वाम् आदधामि इहाऽऽयतने स्थापयामीति मन्त्रार्थः । एवमुत्तरत्रापि योज्यम् । गोत्रान्तरगतानां ब्राह्मणानामादित्या एव देवताः ॥ अभिषिक्तस्य राज्ञो वरुणो देवता ॥ इतरस्य क्षत्रियस्येन्द्रो देवता ॥ इन्द्रियेण व्रतेन इन्द्रियाभिवृद्धिहेतुना कर्मणेत्यर्थः । वैश्यस्य ग्रामनियोजको मनुर्देवता ॥ रथकारोऽनुलोमजः संकीर्णजातिः । तस्य ऋभवो देवता ॥ एतैर्मन्त्रैः यथादेवतम् आधानं संपद्यते ॥

अत्र मीमांसा । षष्ठाध्यायस्य प्रथमपादे चिन्तितम् । "त्रैवर्णिकैव रथकृदन्यो वाऽऽद्योऽस्तु योगतः । त्रैवर्णान्तरं तस्याऽऽधाने पर्युदस्यते" ॥ आधाने श्रूयते—"वर्षासु रथकार आदधीत" इति । तत्र रथं करोतीति व्युत्पत्त्या त्रैवर्णिको रथकार इति चेत् । मैवम् । संकीर्णजातिविशेषे रूढत्वात् । वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः । शूद्रायां वैश्यादुत्पन्ना करणी तस्यां करण्यां माहिष्यादुत्पन्नो रथकारः । तथा च याज्ञवल्क्यः— "माहिष्येण करण्यां तु रथकारः प्रजायते" इति । तस्य वै रथकारस्याऽऽधानशास्त्रे पर्युदस्य ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

१ जै. न्या. मा. ६. १. १२. ।     २ 'करणी' इति पाठः ।     ३ 'वरुणस्य' इति पाठः ।
४ 'वरुणाम्' इति पाठः ।     ५ क्वचित् 'च' इति नास्ति ।

अथ प्रथमकाण्डे तृतीयप्रपाठके पञ्चमोऽनुवाकः ।

प्रजापतिर्वाचः सत्यमपश्यत् । तेनाग्निमाधत्त । तेन वै स आर्ध्नोत् । भूर्भुवः सुवरित्याह । एतद्वै वाचः सत्यम् । य एतेनाग्निमाधत्ते । ऋध्नोत्येव । अथो सत्यप्राश्रूरेव भवति । अथो य एवं विद्वानभिचरति । स्तृणुत एवैनम् । ( १ ) भूरित्याह । प्रजा एव तद्यजमानः सृजते । भुव इत्याह । अस्मिन्नेव लोके प्रतितिष्ठति । सुवरित्याह । सुवर्ग एव लोके प्रतितिष्ठति । त्रिभिरक्षरैर्गार्हपत्यमादधाति । त्रय इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । सर्वैः पञ्चभिराहवनीयम् । ( २ ) सुवर्गाय वा एष लोकायाऽधीयते । यदाहवनीयः । सुवर्ग एवास्मै लोके वाचः सत्यꣳ सर्वमाप्नोति । त्रिभिर्गार्हपत्यमादधाति । पञ्चभिराहवनीयम् । अष्टौ संपद्यन्ते । अष्टाक्षरा गायत्री । गायत्रोऽग्निः । यावानेवाग्निः । तमाधत्ते । ( ३ ) प्रजापतिः प्रजा असृजत । ता अस्मात्सृष्टाः पराचीरायन् । ताभ्यो ज्योतिरुदगृह्णात् । तं ज्योतिः पश्यन्तीः प्रजा अभिसमावर्तन्त । उपरीवाग्निमुद्गृह्णीयादुद्धरन् । ज्योतिरेव पश्यन्तीः प्रजा यज-

( ४२ ) चतुर्थे त्रयाणामाहवनीयादीनामाधानमुक्तम् । पञ्चमे तत्रैव कंचिद्विशेषं पवमानहवींषि चाभिदधाति । तत्राऽऽदौ व्याहृतिमन्त्रान्विधत्ते—(प्रजापतिरिति-) वाचः संबन्धि यत् सत्यम् अवश्यंभाविफलसाधनं मन्त्ररूपं तच्छास्त्रमुखेन(ण) दृष्ट्वा प्रजापतिः तेन अग्निमाधाय समृद्धोऽभूत् । किं तत्सत्यमिति पृच्छद्भ्यः शिष्येभ्यो भूर्भुवः सुवरिति मन्त्रस्वरूपं प्राह । एतस्य वाक्संबन्धिसत्यत्वात् एतेनाग्निम् आदधानः समृद्धो भवति । अपि चासौ सत्यप्राश्रूर्भवत्येव । प्रकर्षेणाश्नुते व्याप्नुतेऽभिमतमनेनेति प्राशूः । पराक्रमः सत्यः । कदाचिदप्यविसंवादी प्राशूः । अपि च एवं व्याहृतिमहिमानं विद्वान् शत्रुं मारयितुमभिचरन् एनं हिनस्त्येव ॥

( ४३ ) सामर्थ्यप्रदर्शनेन व्याहृतित्रयं प्रशंसति—(भूरिति-) योऽयं भूरिति मन्त्रमुच्चारयत्यसौ तन्मन्त्रसामर्थ्येन प्रजाः पुत्रपौत्रादिका उत्पादयति । एवमुत्तरयोरपि योज्यम् ॥

( ४४ ) सामान्येन विहितं व्याहृतित्रयं पुनर्विशेषाकारेण विधत्ते—(त्रिभिरिति-) भूर्भुव इत्येतानि त्रीण्यक्षराणि, तैराधीयमानस्त्वग्निर्लोकत्रये प्रतिष्ठितोऽभिहितो भवति । भूर्भुवः सुवरिति पञ्चाक्षराणि, तैराधीयमानस्याऽऽहवनीयस्य स्वर्गाश्रयत्वात्स्वर्गे नाकसंबन्धि कृत्स्नं सत्यमसौ प्राप्नोति ॥

( ४५ ) अथ त्रयं पञ्चकं च मिलित्वा प्रशंसति—(त्रिभिरिति-) अग्नेर्मुखजत्वेन गायत्रीसंबन्धित्वम् ।

( ४६ ) यदुक्तं सूत्रकारेण—"गार्हपत्ये प्रणयनीयमाश्वत्थमिध्ममादीपयति सिकताश्चोपयमनीरुपकल्पयते तमुद्यच्छति" इति । तदेतद्विधत्ते—(प्रजापतिरिति-) प्रजापतिना सृष्टाः प्रजाः पराच्यः पुनरावृत्तिरहिता यदा गतास्तदा प्रजापतिः ताभ्यो ज्योतिरुदगृह्णात् । अन्धकारे पलायमानानां प्रजानां दर्शनार्थं कंचिद्दीपमूर्ध्वं धृतवान् । ताश्च प्रजा ज्योतिः दृष्ट्वा तं प्रजापतिम् अभिलक्ष्य समावृताः । अतो गार्हपत्यादाहवनीयं प्रत्यग्निमुद्धरन्नूर्ध्वमेव गृह्णीयात् न त्वधो धारयेत् । तेन सर्वाः प्रजा ज्योतिः पश्यन्त्यो यजमानं प्रत्यावर्तन्ते ॥

१ आप. श्रौ. सू. ५. १३. ३–४. । २ °स्य प्रजास्ताः अ° इति पाठः । ३ °नं प्रतिसमावर्तन्ते । इति पाठः ।

मानमभिसमावर्तन्ते । प्रजापतेरक्ष्यश्वयत् । तत्पराऽपतत् । तदश्वोऽभवत् । तदश्वस्याश्वत्वम् । ( ४ ) एष वै प्रजापतिः । यदग्निः । प्राजापत्योऽश्वः । यदश्वं पुरस्तान्नयति । स्वमेव चक्षुः पश्यन्प्रजापतिरनूदैति । वज्री वा एषः । यदश्वः । यदश्वं पुरस्तान्नयति । जातानेव भ्रातृव्यान्प्रणुदते । पुनरावर्तयति । ( ५ ) अजनिष्यमाणानेव प्रतिनुदते । न्यांहवनीयो गार्हपत्यमकामयत । नि गार्हपत्य आहवनीयम् । तौ विभाजं नाशक्नोत् । सोऽश्वः पूर्ववाड्भूत्वा । प्राञ्चं पूर्वमुदवहत् । तत्पूर्ववाहः पूर्ववाट्त्वम् । यदश्वं पुरस्तान्नयति । विभक्तिरेवैनयोः सा । अथो नानावीर्यावेवैनौ कुरुते । ( ६ ) यदुपर्युपरि शिरो हरेत् । प्राणा-

( ४७ ) यदुक्तं सूत्रकारेण—"प्रोथोऽश्वप्रथमा अभिप्रव्रजन्ति" इति । तदेतद्विधत्ते—(प्रजापतेरिति-) पुरा कदाचित् प्रजापतेः अक्षिगोलकं केनापि व्याधिनोच्छूनं भूत्वा भूमौ पतितं तदश्वरूपेणोदभूत् । अश्वयदभूदिति व्युत्पत्त्या तस्य अश्वनाम संपन्नम् । अग्निः च प्रजापतिसृष्टत्वात्प्रजापतिरेव । अश्वः चोक्तरीत्या प्राजापत्यः । तस्मादाहवनीयं प्रति गच्छन् अश्वं पुरस्तात् नयेत् । तथा सति [ स्वमेव ] स्वकीयमेव चक्षुः पश्यन् प्रजापतिरूपोऽग्निः अनुगच्छति ॥

( ४८ ) एतदेवाश्वस्य पुरोगमनं पुनः प्रशंसति—(वज्री वेति-) वैरिवधुदे शत्रुविनाशहेतुत्वात् अश्वः वज्री । स च पुरस्तात् नीयमानो यजमानस्य पूर्वमुत्पन्नान् भ्रातृव्यान् विनाशयति । वज्रसमानदन्तोपेतत्वाद्वाऽस्य वज्रित्वम् । एतदेवाभिप्रेत्याभिब्राह्मणे समाम्नातम्—"वैज्री वा एष यदश्वो दद्भिरन्यतोदन्भ्यो भूयान्" इति ॥

( ४९ ) आहवनीयपर्यन्तं नीतस्याश्वस्य तेनैव पथा पुनरावृत्तिं विधत्ते—(पुनरावर्तयतीति-) आहवनीयात्पुनरावृत्त्या भविष्यतः शत्रून्प्रतिबध्नाति ॥

( ५० ) यदुक्तं सूत्रकारेण—"पूर्ववाडश्वो भवति" इति । तदिदं विधत्ते—(न्याहवनीय इति-) पुरा कदाचित् आहवनीयः गार्हपत्यं नितराम् अकामयत गार्हपत्यधर्मं धृतवानित्यर्थः । गार्हपत्यः च नितराम् आहवनीयधर्मं धृतवान् । ततः तौ उभावग्नी संकीर्णधर्मतया प्रजापतिः विभाजं विभक्तुं नाशक्नोत् । ततस्तद्विभागाय स्वयं पूर्ववाट् अश्वो भूत्वा धर्मसांकर्यं परिहृत्य प्राञ्चं प्राग्देशनिवासयोग्यमाहवनीयं पूर्वमुदवहत् पूर्वदेशं प्रत्युद्धृत्य नीतवान् । पूर्ववाडित्यश्वविशेषः । सेनामध्ये इतरेभ्योऽश्वेभ्यः पूर्वं वहतीति वा पूर्वस्मिन् वयस्यनन्तरमेव वहतीति वा पूर्ववाट् । अतस्तादृशम् अश्वम् अत्र पुरस्तात् नयेत् । तस्य च विभागक्षमत्वात् एनयोः अग्न्योः सैव विभक्तिः विभागः संपद्यते । पूर्वदेशेऽवस्थित आहवनीयः पश्चिमदेशेऽवस्थितो गार्हपत्य इति विभागः । अपि च धर्मसांकर्यपरिहारादेनावुभावग्नी भिन्नवीर्यावेव करोति । पत्नीसंयाजहोमाधारत्वलक्षणं वीर्यं गार्हपत्यस्यैव । आग्नेयादिहविराधारत्वलक्षणमाहवनीयस्यैव ॥

( ५१ ) यदुक्तं सूत्रकारेण—"नै कर्णदघ्नमत्युद्गृह्णाति" इति । तदिदं विधत्ते—(यदुपर्युपरीति-) हस्तेनोद्धृत्याऽऽहवनीयं प्रति नीयमानमग्निं शिरः उपर्युपरि शिरःसमीपवर्तिन्यूर्ध्वभागे धृत्वा यदि हरेत् तदा प्राणा विच्छिद्येरन् । अतः प्राणरक्षणाय शिरसः समीपवर्तिन्यधःप्रदेशे धृत्वा नयेत् ॥

१ आप. श्रौ. सू. ५. १४. ५. । २ °वज्रवधु°-पाठः । ३ तै. सं. ५. १. २. । ४ आप. श्रौ. सू. ५. १४. १७. । ५ आप. श्रौ. सू. ५. १४. ८. ।

न्विच्छिन्द्यात् । अधोऽधः शिरो हरति । प्राणानां गोपीथाय । इयत्यग्रे हरति ।
अथेयत्यथेयति । त्रय इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । प्रजा-
पतिरग्निमसृजत । सोऽबिभेत्प्र मा धक्ष्यतीति । (७) तस्य त्रेधा महिमानं
व्यौहत् । शान्त्या अप्रदाहाय । यत्त्रेधाऽग्निराधीयते । महिमानमेवास्य तद्
व्यूहति । शान्त्या अप्रदाहाय । पुनरावर्तयति । महिमानमेवास्य संदधाति ।
पशुर्वा एषः । यदश्वः । एष रुद्रः । (८) यदग्निः । यदश्वस्य पदेऽग्निमादु-
ध्यात् । रुद्राय पशूनपिदध्यात् । अपशुर्यजमानः स्यात् । यन्नाऽऽक्रमयेत् ।
अनवरुद्धा अस्य पशवः स्युः । पार्श्वत आक्रमयेत् । यथाऽऽहितस्याग्नेरङ्गारा
अभ्यववर्तेरन् । अवरुद्धा अस्य पशवो भवन्ति । न रुद्रायापिदधाति ॥ (९)
[1]त्रीणि हवींषि निर्वपति । विराज एव विक्रान्तं यजमानोऽनुविक्रमते ।
अग्नये पवमानाय । अग्नये पावकाय । अग्नये शुचये । यदग्नये पवमानाय निर्व-

(५२) यदुक्तं सूत्रकारेण—"जानुदघ्ने धारयमाणस्तृतीयमध्वनोऽभिहरति, नाभिदघ्ने तृतीयमास्यदघ्ने तृतीयम्" इति । तदेतदस्याऽभिनयन्निधत्ते—(इयत्यग्र इति-) इयति जानुदघ्ने । एवं नाभिदघ्नास्यदघ्नयोरपि ॥

(५३) एतस्मादग्निप्रणयनात्पूर्वमग्नेर्विभागं विधत्ते—(प्रजापतिरिति-) अग्निं सृष्ट्वा तदीयदाहाद् बिभ्यत् प्रजापतिः तदीयसामर्थ्यं त्रेधा व्यभजयत् । सोऽयं विभागो ज्वालायाः शान्त्यै स्वविषये (अप्रदाहाय-) दाहाभावाय च सम्पन्नः । एवमन्योऽप्यग्निरपि गार्हपत्याद्देशेरेकं भागमाहवनीयार्थमपरं भागं दक्षिणाग्न्यर्थं च विभज्य [शान्त्यै अप्रदाहाय-] शान्त्यर्थमप्रदाहार्थं च त्रेधा कुर्यात् ॥

(५४) तत्राऽऽहवनीयार्थस्याग्नेराहवनीयायतनं प्रति नयनं विधत्ते—(पुनरावर्तयतीति-) विभागेन योऽस्यैर्महिमा शान्तत्वं महिमानं पुनः संधातुं विभक्तमग्निमाहवनीयायतने स्थापयेत् ॥

(५५) तत्र स्थापने कंचिद्विशेषं विधत्ते—(पशुर्वेति-) अत्रेदं चिन्त्यते—पुरस्तादानीतमश्वं किमाहवनीयायतनमानयेत्र वेति । उभयमप्येतदनुपपन्नम् । अश्वस्य पशुत्वात् । अग्नेः क्रूरदेवतात्वाच्च । अश्वपदलाञ्छिते प्रदेशेऽग्निस्थापने सति [रुद्राय] क्रूरदेवाय पशून् समर्पयेत् । ततो यजमानः [अपशुः] पशुरहितः स्यात् । अनाक्रमणे तु [अस्य] यजमानस्य पशवः न संभवेयुः । अत उभयदोषपरिहारार्थमायतनस्य सन्निधिपार्श्वे तमश्वम् आक्रमयेत् । स्वायतने [आहितस्य] स्थापितस्य प्रज्वाल्यमानस्य अग्नेरङ्गाराः येन प्रकारेण तदश्वपदम् अभिलक्ष्य स्रस्ता एव प्रवृत्ता भवन्ति तथा समीपवर्तिप्रदेशमाक्रमयेत् । एवं सत्यङ्गाराणामश्वपदे प्रविष्टत्वात् पशवः अपि लभ्यन्ते । स्वयं बुद्धिपूर्वकमश्वपदेऽग्नेरप्रतिष्ठापनाद्रुद्रदेवाय पशवः अपि ॥ समर्पिता भवेयुः ॥

(५६) इयमाधानगतो विशेषो निरूपितः । अथ पवमानहवींषि विधत्ते—(त्रीणि हवींषीति-) विशेषेण राजत इति विराडग्निस्तस्य विक्रान्तं सामर्थ्यम् अनु यजमानः अपि विक्रमते समर्थो भवति ॥

(५७) सामान्येन विहितानां हविषां देवताविशेषान्विधत्ते—(अग्नय इति-) पवमानः स्वयं शुद्धः । पावकोऽन्यस्य शोधकः । शुचिर्दीप्यमानः । तत्र प्रथमेन यजमानशुद्धिः । द्वितीयेनाघनाशनम् । तृतीयेन फलद्वयस्योपरिष्टादवस्थानमिति ॥

[1] आप. श्रौ. सू. ५. १४. ८.

पति । पुनात्येवैनम् । यदग्नये पावकाय । पूत एवास्मिन्नन्नाद्यं दधाति । यद्-
ग्नये शुचये । ब्रह्मवर्चसमेवास्मिन्नुपरिष्टाद्धाति । ( १० )

एनमाहवनीये यत्तेऽश्वत्थ वर्तयति कुरुत इति रुद्रो दधाति यदग्नये शुचय एकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

अत्र मीमांसा—तृतीयाध्यायस्य षष्ठपादे चिन्तितम्—"संस्कृते पवमानेष्ट्या वह्नौ होमैर्न चेदय । वह्नौ तत्संस्कृते सर्वार्थो दर्शाद्यनुरोधतः ॥ चोदकः पवमानेष्टौ न ताः प्रापयितुं प्रभुः । अनङ्गत्वेऽप्यग्निसिद्धिर्याभिरिष्टि-भिरस्त्वसंस्कृते" ॥ पवमानाद्यैरिष्टिभिराहवनीयादयः संस्क्रियन्ते । संस्कृतेष्वग्निहोत्रदर्शपूर्णमासादिक्रतवः प्रव-र्तन्ते । तथा सति—किमेताः पवमानेष्टयस्ताभिरिष्टिभिः संस्कृते वह्नौ कर्तव्या, इष्टित्वात् । इतरेष्टिवत्—। चोदकोऽप्येवं सत्यनुगृहीतो भवति । एताभिरिष्टिभिः संस्कृते वह्नौ प्रकृत्यनुगमनात्—इति प्राप्ते ब्रूमः—यद्यपि पव-मानेष्टिविकृतिरूपाऽपि चोदको न तस्याः पवमानेष्टौ ताः पवमानेष्टिमतिदेष्टुं प्रभवति । प्रकृतौ प्रयाजादिवत्पव-मानेष्टेरङ्गत्वाभावात् । किं च 'एतस्याः पवमानेष्टेः संस्कृतामितिवक्तव्यं पवमानेष्ट्यन्तराङ्गीकारे तत्रापि तथा' इत्यन-वस्थायामिष्टिरेव न सिध्येत् । तस्मात्ताभिरिष्टिभिरसंस्कृते वह्नौ पवमानेष्टयः कर्तव्याः ।

दशमाध्यायस्य द्वितीयपादे चिन्तितम्—"लुप्यते पवमानेष्टौ निर्वापः क्रियतेऽथवा । लुप्यते साधनाभावात्तेन मुख्यो न लुप्यते" ॥ आधानप्रकरणाम्नातायां पवमानेष्टौ निर्वापसाधनं नास्ति । अग्निहोत्रहवणी हि प्रकृतौ निर्वापसाधनम् । सा चाऽऽधानकाले न संभवति । अग्निहोत्रस्याऽऽधानोत्तरकालीनत्वेन तद्धोमसाधनभूताया स्तस्या अपि तथात्वादिति प्राप्ते ब्रूमः—मुख्यो निर्वापः । स च गुणभूताऽग्निहोत्रहवण्या । न हि गुणलोपेन मुख्यो लोप्तुमर्हति । किंचाऽऽधानकाले स्वरूपेणैवाविद्यमानाया अग्निहोत्रहवण्याः साधनत्वं दूरापेतम् । [illegible] साधनाभावादित्यनुपन्यासः । तस्मान्निर्वापो न लुप्यते ।

पञ्चमाध्यायस्य तृतीयपादे चिन्तितम्—"आहिते पवमानेष्टिसंस्कृते वाऽग्निहोत्रकम् । आधानेनाग्निनिष्पत्ते-स्तस्मिन्कर्म समाचरेत् ॥ आधानस्यानपेक्षस्य नाग्न्युत्पादकता मता । तासु चितस्य हेतुत्वात्कर्म स्यादिष्टिसंस्कृते" ॥ आग्न्याधानादूर्ध्वं विलम्ब्य पवमानेष्टयः क्रियन्ते । "द्वादशसु रात्रिष्वनुनिर्वपेत्" इतीष्टीनां कालविधानात् । ताभ्यः पुरा द्वादशसु दिनेष्वग्निहोत्रमनुष्ठेयम् । आधानमात्रेणाऽऽहवनीयाद्यग्निनिष्पन्नत्वादिति प्राप्ते ब्रूमः—आधानं पव-मानेष्टिनिरपेक्षेण नाऽऽहवनीयादीनुत्पादयति । अन्यथा पवमानेष्टिवैयर्थ्यप्रसङ्गात् । न च विलम्बः । आधा-नमुपजीव्य तस्मादुत्तरकाले विधानात् । तेन इष्टिभिः समुच्चितेनाऽऽधानमग्न्युत्पादकमिताविष्टिभिः संस्कृते वह्नौ पश्चादग्निहोत्रानुष्ठानम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये
प्रथमकाण्डे प्रथमप्रपाठके पञ्चमोऽनुवाकः ॥ ५ ॥

---

१ जै. न्या. मा. ३. ६. ६. । २ जै. न्या. मा. १०. २. ७. । ३ "०प्रकरणगतायाम्" इति पाठः । ४ 'लोपमर्हति' इति पाठः । ५ 'साधनासंभवात्' इति पाठः । ६ 'न' इति क्वचिन्नास्ति । ७ जै. न्या. ५. ३. ५. । ८ "होमहवनी" इति पाठः ।

अथ प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ।

देवासुराः संयत्ता आसन् । ते देवा विजयमुपयन्तः । अग्नौ वामं वसु
संन्यदधत । इदमु नो भविष्यति । यदि नो जेष्यन्तीति । तदग्निर्नोत्सहमश-
क्नोत् । तत्त्रेधा विन्यदधात् । पशुषु तृतीयम् । अप्सु तृतीयम् । आदित्ये
तृतीयम् । ( १ ) तद्देवा विजित्य । पुनरवारुरुत्सन्त । तेऽग्नये पवमानाय पुरो-
डाशमष्टाकपालं निरवपन् । पशवो वा अग्निः पवमानः । यदेव पशुष्वासीत् ।
तत्तेनावारुन्धत । तेऽग्नये पावकाय । आपो वा अग्निः पावकः । यदेवाप्स्वा-
सीत् । तत्तेनावारुन्धत । ( २ ) तेऽग्नये शुचये । असौ वा आदित्योऽग्निः
शुचिः । यदेवाऽऽदित्य आसीत् । तत्तेनावारुन्धत । ब्रह्मवादिनो वदन्ति ।
तनुवो वा एता अग्न्याधेयस्य । आग्नेयो वा अष्टाकपालोऽग्न्याधेयमिति । यत्तं
निर्वपेत् । नैतानि । यथाऽऽत्मा स्यात् । ( ३ ) नाङ्गानि । तादृगेव तत् ।
यदेतानि निर्वपेत् । न तम् । यथाऽङ्गानि स्युः । नाऽऽत्मा । तादृगेव तत् ।
उभयानि सह निरुप्याणि । यज्ञस्य सात्मत्वाय । उभयं वा एतस्येन्द्रियं वीर्य-

( ५८ ) पञ्चमे पवमानहवींषि संक्षिप्योक्तानि । अथ षष्ठे तद्विस्तारो हविरन्तराणि दक्षिणाश्चोच्यन्ते । तत्र प्रथमं तावत्पवमानहविषां देवताविशेषस्य पूर्वमुक्तत्वात्तदनुवादेन हविर्विशेषं विधत्ते—(देवासुरा इति-) यदा देवासुराः परस्परं युद्धोद्युक्तास्तदानीं विजयम् अपेक्षमाणा देवाः स्वकीयं वामं वननीयं वसु धनमग्नौ सम्यक्स्थापितवन्तः । तेषामयमभिप्रायः—यदि [नः]अस्मानसुरा जेष्यन्ति तदानीमापत्कालेऽस्माकम् इदमु एव धनं जीवनाय भविष्यतीति । अग्निः तद्भाराधिक्येन तद्धनमुद्धृत्य सोढुं नाशक्नोत् । तत्त्रेधा विभज्य पश्वादिषु स्थापितवान् । तदानीं देवाः चासुरान् विजित्य पुनः स्वकीयं धनं प्राप्तुमैच्छन् । तदा पश्वाद्यभिमानिदेवतासु स्थापितं धनं बलादवरोद्धुमशक्ताः सन्तस्तदुपलब्ध्यर्थं पवमानगुणकायाग्नये पुरोडाशं निरवपन् । पशवः च पवमानाग्न्यधीनत्वात्तत्स्वरूपाः । तेन च हविषा पवमानमग्निं तर्पयित्वा पशुष्ववस्थितं धनं स्वीकृतवन्तः । एवं ते देवाः पावकगुणयुक्तायाग्नये पुरोडाशं निरवपन्नित्यनुवर्तते । अपां पावकाग्न्यधीनत्वात्तन्मुखेनाप्सु स्थितं धनं प्राप्नुवन् । तथा शुचिगुणकायाग्नये पुरोडाशं निरुप्य तस्याग्नेरादित्यरूपत्वादादित्ये स्थापितं धनमाप्नुवन् । तस्मादेताभ्यो देवताभ्यः प्रत्येकमष्टाकपालं पुरोडाशं निर्वपेदिति द्रव्यविधिरुन्नेयः ॥

( ५९ ) अथैतेषां हविषामाग्नेयेन हविरन्तरेण सह निर्वापं विधत्ते—(ब्रह्मवादिन इति-) याः पूर्वोक्ताः पवमानाद्यादिदेवतास्तिस्रस्ता आधानरूपस्य देवविशेषस्य शरीराणि । यस्तु ताभ्योऽतिरिक्तोऽष्टाकपाल आग्नेयः सोऽग्न्याधेयस्य स्वरूपभूतः पूर्वोक्तशरीरत्रयस्वामी । एवं सत्याग्नेयं निरुप्य पवमानहविषामनिर्वापेऽवयवरहितः केवल आत्मा एव स्यात् । अथ तानि हवींषि निरुप्याऽऽग्नेयस्य निर्वापो न क्रियेत तदानीमात्मरहिताः केवला अवयवा एव स्युः तस्मादाग्नेयेन सह पूर्वाणि त्रीणि हवींषि निरुप्याणि । तथा सति यज्ञस्य सावयवत्वं सात्मत्वं च संपद्यते ॥

( ६० ) अथानुनिर्वाप्यं हविर्द्वयं विधत्ते—(उभयमिति-) अग्निमादधानस्येन्द्रियवीर्यस्य प्राप्त्या भवितव्यम् । अतस्तत्सिद्ध्यर्थमिन्द्राग्निदेवताकं पुरोडाशमनुनिर्वपेत् । देवानां मध्य इन्द्राग्न्योरगतसारत्वात्तत्प्रसादेनेन्द्रियवीर्यप्राप्तिर्भवति । अगतसारत्वं चानयोर्जेतृत्वादवगन्तव्यम् । अयञ्च राजसूयप्रकरणे पठ्यते—"देवा वा

१ तै. ब्रा. १. ६. १. १

प्यते । ( ४ ) योऽग्निमाधत्ते । ऐन्द्राग्नमेकादशकपालमनुनिर्वपेत् । आदित्यं रुम् । इन्द्राग्नी वै देवानामयातयामानौ । ये एव देवते अयातयाम्नी । भ्यामेवास्मा इन्द्रियं वीर्यमवरुन्द्धे । आदित्यो भवति । इयं वा अदितिः । स्यामेव प्रतितिष्ठति । [3]धेन्वै वा एतद्रेतः । ( ५ ) यदाज्यम् । अनडुहस्त-ण्डुलाः । मिथुनमेवावरुन्द्धे । घृते भवति । यज्ञस्यालूक्षान्तत्वाय । [3]चत्वार आर्षेयाः प्राश्नन्ति । दिशामेव ज्योतिषि जुहोति । [3]पशवो वा एतानि हवीꣳषि । एष रुद्रः । यदग्निः । ( ६ ) यत्सद्य एतानि हवीꣳषि निर्वपेत् । रुद्राय पशूनपि दध्यात् । अपशुर्यजमानः स्यात् । यन्नानुनिर्वपेत् । अनवरुद्धा अस्य पशवः स्युः । द्वादशसु रात्रीष्वनुनिर्वपेत् । संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरेणैवास्मै रुद्रꣳ शमयित्वा । पशूनवरुन्द्धे । यदेकमेकमेतानि हवीꣳषि निर्वपेत् । ( ७ ) यथा त्रीण्यावपनानि पूरयेत् । तादृक्तत् । न प्रजननमुच्छिꣳ-

क्षोपधीष्वाविशन्नु । ता इन्द्राग्नी उदजयताम्" इति । आदित्यचरुनिर्वापेण भूम्यां प्रतितिष्ठति । भूमेरखण्डनीयत्वेनादितित्वात् ॥

( ६१ ) अस्य चरोः सहकारित्वेन घृतं विधत्ते—(धेन्वै वेति-) आज्यस्य धेनुनिष्पाद्यत्वात्तद्रेतस्त्वम् । तण्डुलानां यानवहनक्षमायां भूमौ निष्पाद्यत्वात्तद्रेतस्त्वम् । अत उभयमेलने सति मिथुनं संपद्यते । तस्मात्तन्निष्पत्तये घृते तण्डुलाः प्रक्षेप्तव्याः । एतेन घृतेन यज्ञस्यालूक्षान्तत्वं संपद्यते । लूक्षो रूक्षः स्नेहरहितः परुषः । तद्विपरीतोऽलूक्षः । तादृशोऽन्तः समीपवर्ती द्रव्यविशेषो यज्ञस्य सोऽयमलूक्षान्तस्तस्य भावोऽलूक्षान्तत्वं तत्सिद्धये घृतप्रक्षेपः ॥

( ६२ ) यदुक्तं सूत्र[कारे]ण—"चतुर्धाकरणकाल आदित्यं ब्रह्मणे परिहरति तं चत्वार आर्षेयाः प्राश्नन्ति" इति । तदिदं विधत्ते—(चत्वार इति-) सोऽयमादित्यचरुस्तस्यैतदग्निप्रचतुर्धाकरणं नास्ति किं तु ब्रह्मणो हस्ते सर्वं दत्त्वा चत्वार ऋत्विजः प्राश्नीयुः । तेषां श्रुताध्ययनसंपन्नत्वादार्षेयत्वम् । अत एवान्यत्राऽऽम्नातम्—"आर्षेयो यः शुश्रुवान्" इति चतुःसंख्यासाम्येन दिशां चतसृणां संबन्धिनि ज्योतिषि हुतं भवति ॥

( ६३ ) उक्तानां हविषां कालविशेषं विधत्ते—(पशव इति-) अत्रेदं विचिन्त्यते—यस्मिन्दिनेऽग्नय आहितास्तस्मिन्दिने किमु एतानि हवींषि निर्वपेदिति वा नेति । तत्र निर्वापो न युक्तः । एतेषां हविषां पशुसाधनत्वेन पशुरूपत्वात् । आहितस्य चाग्नेः क्रूरदेवत्वात्सद्यः क्रूराय पशूनर्पयन्प्रसङ्गात् यजमानोऽप्यपशुः स्यात् । अनिर्वापपक्षे तु पशवो न संपादिताः स्युः । अतो दोषद्वयपरिहारायाऽऽधानादूर्ध्वं द्वादशसु रात्रीषु गतासु पश्चाद्धवींषि निर्वपेत् । द्वादशसंख्याया माध्यद्वारेण साम्या संवत्सरत्वात्तद्धेतुयजमानार्थं संवत्सरेणैव अग्निं शान्तं कृत्वा पशून् प्राप्नोति ॥

( ६४ ) तन्निर्वापे संनिहितदोषं विधत्ते—(यदेकमेकमेतानीति-) एतानि त्रीणि पवमानहवींषि पृथक्पृथगेव निर्वपेत् इति येषांचिन्मन्दानां पक्षः । तस्मिन्पक्षे यथा लोके त्रीणि बीजावापस्थानानि क्षेत्राणि बीजैः पूरितानि भवन्ति तथा लोकत्रयस्यापि त्रिभिर्हविर्भिः पूरितत्वाद्यजमानस्य स्थानत्वेन प्रजोत्पत्तिस्थाने किमपि नावशिष्येत । तस्मात् प्रथमम् एकं हविः पृथक् निरुप्य द्वितीयतृतीये हविषी सम्भूय निर्वपेत् । तथा सति निर्वापद्वयेन लोकद्वयस्यैव पूरितत्वात्तृतीयो लोको यजमानस्य प्रजोत्पादनावकाशो भवति ।

१ °रीलादरथः इति पा० ।　२ आप. श्रौ. सू. ५. २२. ३. ।　३ "वा अन्वदेति त°" इति पा० ।
३ आ० ब्रा०

पेत्। एकं निरुप्य। उत्तरे समस्येत्। तृतीयमेवास्मै लोकमुच्छिꣳषति प्रजननाय। तं प्रजया पशुभिरनुप्रजायते। अथो यज्ञस्यैवैषाऽभिक्रान्तिः। रथचक्रं प्रवर्तयति। मनुष्यरथेनैव देवरथं प्रत्यवरोहति। ब्रह्मवादिनो वदन्ति। होतव्यमग्निहोत्रा३ँ न होतव्या३मिति। यद्यजुषा जुहुयात्। अयथापूर्वमाहुती जुहुयात्। यन्न जुहुयात्। अग्निः पराभवेत्। तूष्णीमेव होतव्यम्। यथापूर्वमाहुती जुहोति। नाग्निः पराभवति। अग्नीधे ददाति। (९) अग्निमुखानेवर्तून्प्रीणाति। उपबर्हणं ददाति। रूपाणामवरुद्ध्यै। अश्वं ब्रह्मणे। इन्द्रियमेवावरुन्द्धे। धेनुꣳ

प्रतरं लोकमनु यजमानः प्रजापशुसमृद्धो भवति। अपि च यत्तृतीयलोकावशेषणमेषा यज्ञस्यैवाभिक्रान्तिः अभितो व्याप्तिः। प्रजापशुरूपस्य तत्फलस्य निष्पन्नत्वात्॥

(६५) यदुक्तं सूत्रकारेण—"आग्नेयोऽश्वप्रथमा अभिप्रव्रजन्ति दक्षिणतो ब्रह्मा रथं रथचक्रं वा प्रवर्तयति यावच्चक्रं त्रिः परिवर्तते" इति[1]। तदेतद्विधत्ते—(रथचक्रमिति–) गार्हपत्यादाहवनीयं प्रत्यग्नेः प्रणयनकाले रथचक्रस्य प्रवर्तनम्। अनेन मनुष्यरथप्रवर्तनेन नीयमानाग्न्यर्थं देवरथ एव प्रवर्तितो भवति॥

(६६) अथ मीमांसामुखेन होमनिर्णयं करोति—(ब्रह्मवादिन इति–) नेयं नित्याग्निहोत्रविषया मीमांसा। तस्य पवमानेष्टिभ्य ऊर्ध्वं प्रवर्तयिष्यमाणत्वात् किंत्वाधानाङ्गमेतत्किंचित्कर्म। "पूर्णाहुतेः प्राक्प्रवर्त-मानत्वात्। पूर्णाहुत्यन्तमग्न्याधेयम्" इत्याश्वलायनेनोक्तम्। अस्य चाऽऽधानाङ्गस्याग्निहोत्रस्य मन्त्रेण होमे त्वयथापूर्वत्वं प्रसज्येत। तथा हि। अग्निहोत्रशब्दोऽत्र नित्याग्निहोत्रधर्मानतिदिशति। नित्याग्निहोत्रे च—"सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा" इति[2]। प्रथमहवि पठितो होममन्त्रः सोऽत्र अप्राप्तः। अहन्येव हूयमान-त्वात्। प्रकृतिभूते त्वग्निहोत्रे रात्रावेवोपक्रमात्। "अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा" इति मन्त्रस्य रात्रिहोमाङ्ग-त्वात्तेन मन्त्रेण प्रथममनुष्ठाय पश्चात्प्रातःकाले "सूर्यो ज्योतिः" इति मन्त्रेणानुष्ठानमित्येव क्रमः। इह त्वादावेव "सूर्यो ज्योतिः" इति मन्त्रेणानुष्ठाने प्रकृतिवैलक्षण्यादयथापूर्वत्वम्। अहोमपक्षे त्वाधानेनोत्पन्नः अग्निः आहाराभावात् पराभूतो भवेत्। अतो दोषद्वयं परिहर्तुं मन्त्रं परित्यज्य तूष्णीमेव होतव्यम्। तथा सति मन्त्रपरित्यागादयथापूर्वत्वदोषो न भवति। होमस्यानुष्ठितत्वादग्नेः पराभवोऽपि न भवति॥

(६७) यदुक्तं सूत्रकारेण—"आग्नेयस्य दक्षिणाकाले दक्षिणा ददात्यजं पूर्णपात्रमुपबर्हणं क्षौमसूत्रमित्य-ग्नीध उपबर्हणं ददात्यश्वं ब्रह्मणेऽध्वर्यवे वाऽऽहवनीयदेशेऽनड्वाहमध्वर्यवेऽपरेण गार्हपत्यं धेनुꣳ होत्रे वासो गावौ मिथुनौ गावौ नवं च रथं ददाति तानि साधारणानि सर्वेषामा द्वादशभ्यो ददातीत्युक्त्वाऽऽह काममूर्ध्वं देयमपरिमितस्यावरुद्ध्या इति विज्ञायते ऊर्ध्वमादिष्टदक्षिणाभ्यो वदति षड्देया द्वादश देयाश्चतुर्विंशतिर्देया इति वा विकल्पयन्ते" इति[7]। तदेतत्सर्वं क्रमेण विधत्ते—(अग्नीध इति–) आग्नीध्रेण तत्तद्देवताभ्योऽभिधीयमानत्वात्तस्मै दत्तेन द्रव्येणाग्निसहितानामृतूनां प्रीतिः तस्मै यद्देयम् उपबर्हणं शिरसः पृष्ठस्य वाऽऽधारभूतं तस्य कार्पास-शाणोर्णादिमयं शुक्लनीलपीतादिवर्णैः सर्वैः सूत्रैर्निष्पन्नत्वात्तेन रूपाणां प्राप्तिः। अश्वस्य प्रजापतिचक्षुर्जन्य-त्वात्तेनेन्द्रियप्राप्तिः। दातव्याया धेनोः कामधेनुरूपत्वादाशिषां प्राप्तिः। अनड्वान्शकटं वहति। अग्निश्च हव्यं वहति। अध्वर्युरप्यनुष्ठानं वहति। ततः समानत्वाद्बलीवर्दरूपेणाध्वर्युरूपेण च वह्निनैव यज्ञस्य वह्निरश-

१ आप. श्रौ. सू. ५. १४. ५–६.। २ आप. श्रौ. सू. २. १.। ३ तै. ब्रा. २. १. २.। ४ तै. ब्रा. २. १. २.। ५ तै. ब्रा. २. १. २.। ६ तै. ब्रा. २. १. २.। ७ आप. श्रौ. सू. ५. २०.। ८ द्रव्यं प° इति पाठः।

होत्रे । आशिष एवावरुन्द्धे । अनड्वाहमध्वर्यवे । वह्निर्वा अनड्वान् । वह्निरध्वर्युः । (१०) वह्निनैव वह्नियज्ञस्यावरुन्द्धे । मिथुनौ गावौ ददाति । मिथुनस्यावरुद्ध्यै । वासो ददाति । सर्वदेवत्यं वै वासः । सर्वा एव देवताः प्रीणाति । आ द्वादशभ्यो ददाति । द्वादश मासाः संवत्सरः । संवत्सर एव प्रतितिष्ठति । काममूर्ध्वं देयम् । अपरिमितस्यावरुद्ध्यै । (११)

आदित्ये सुवर्णमस्मासीत्तेनावारुन्धतु स्वाद्वोऽध्यन्ते रेतोऽग्निरेकमेवाग्नि हवीꣳषि निर्वपेत्समुत्यवरोहति दद्यात्प्रथर्युर्देयमेकं च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

संवत्सरिणहविर्वहनमाप्नोति । गोमिथुनेन मनुष्यमिथुनमाप्नोति । वाससः सर्वदेवत्यत्वं दीक्षाप्रकरणे—"अग्नेस्तूपाधानं वायोर्वातपानम्" इत्यादिवाक्येन प्रतिपादितम् । आ द्वादशभ्यो गोभ्य इति शेषः । उक्तदक्षिणाभ्य ऊर्ध्वम्—"षड् देया द्वादश देया" इत्यादिशाखान्तरोक्तबहुपक्षानुसारेण स्वाभिमतं यावत्तावद्देयम् । तेनापरिमितफलप्राप्तिः ।

अत्र मीमांसा । एकादशाध्यायस्य चतुर्थपादे चिन्तितम्—"पवमानेष्टिहविषां तन्त्रं भेदोऽथ वाऽग्रिमः । शाखादेशाद्यभेदेन काम्ये भेदोक्तितोऽन्तिमः ॥" आधानप्रकरणे पठ्यते—"अग्नये पवमानायाष्टाकपालं निर्वपेदग्नये पावकायाग्नये शुचये" इति । तैरेतैर्हविर्भिः साध्यस्याग्नेरेकत्वाद्देशाद्यभेदाच्चाङ्गानां तन्त्रमिति प्राप्ते ब्रूमः—"यं कामयेतोत्तरं वसीयान्श्रेयान्स्यामिति तस्याग्नये पवमानाय निरुप्याग्नये पावकाय शुचये घोरारे हविषी समानबर्हिषि निर्वपेत्" इति वचनात्काम्यप्रयोगे प्रथमस्य हविषोऽङ्गभेदः । उत्तरयोस्तन्त्रम् । नित्यप्रयोगे त्रयाणां तन्त्रम् ।

द्वादशाध्यायस्य चतुर्थपादे चिन्तितम्—"एका देया समुच्चेयं विकल्प्यं वाऽऽद्य आनते । तौल्यात्तन्त्रिमो नैरपेक्ष्यात्सङ्ख्यान्तरादपि ॥" आधाने श्रूयते—"एका देया षड् देया द्वादश देयाः" इत्यादि । तत्र सोमक्रयन्यायेनाऽऽनते तौल्यात्समुच्चय इति चेत् । नैवम् । सङ्ख्यानां व्रीह्यादिवत्परस्परनैरपेक्ष्यावगमात् । समुच्चये तु श्रूयमाणाभिः सङ्ख्याभिः सङ्ख्यान्तरस्य दुर्वारत्वाच्च । तस्माद्विकल्पः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके षष्ठोऽनुवाकः ॥ ६ ॥

---

१ तै स ६ १. १ । २ आप श्रौ सू ५ २० १३ । ३ जै न्या मा ११ ४ ४ ४ । ४ तै स २ २ ४ । ५ आप श्रौ सू ५ २१ ७ । ६ जै. न्या. १२, ४, ६ । ७ आप. श्रौ सू ५ २०. १३. । ८ 'तु' इति क्वचिन्नास्ति ।

अथ प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ।

घर्मः शिरस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । छर्दिस्तोकाय तनयाय यच्छ । वातः प्राणस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । स्वदितं तोकाय तनयाय पितुं पच । प्राचीमनु प्रदिशं प्रेहि विद्वान् । अग्नेरग्ने पुरो अग्निर्भवेह । विश्वा आशा दीद्यानो विभाहि । ऊर्जं नो धेहि द्विपदे चतुष्पदे (१) अर्कश्चक्षुस्तदसौ सूर्यस्तदयमग्निः । संप्रियः पशुभिर्भुवत् । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वाऽऽदधे । अग्निनाऽग्ने ब्रह्मणा । आनशे व्यानशे सर्वमायुर्व्यानशे । [1]ये ते अग्ने शिवे तनुवौ । विराट् च स्वराट् च । ते मा विशतां ते मा जिन्वताम् (२) ये ते अग्ने

(६८) षष्ठे हविर्विशेषा दक्षिणाश्चोक्ताः । अथ सप्तमे आधानमन्त्रा उच्यन्ते । तत्राऽऽदौ गार्हपत्यविषयं मन्त्रमाह—(घर्मः शिर इति-) घर्मो दीप्तिर्ज्वालात्मा, स च घर्मोऽग्निशरीरस्य शिरःस्थानीयः । तच्छिरोऽयं पुरोवर्ती गार्हपत्योऽग्निः । अतस्त्वं हे गार्हपत्याग्ने । त्वमस्मदीयैः पशुभिः सह संप्रियो भुवत् सम्यक्प्रीतियुक्तो भव । ततोऽस्मदपत्याय तदीयापत्याय च छर्दिः यच्छ तेजो देहि ॥

(६९) अथान्वाहार्यपचनविषयं मन्त्रमाह—(वात इति-) योऽयमग्निरूपो वायुः सोऽग्नेः प्राणः तत्प्राणरूपमयमाधीयमानोऽन्वाहार्यपचनोऽग्निः । हेऽन्वाहार्यपचन । त्वमस्मदीयैः पशुभिः सह संप्रियो भव । अस्मत्पुत्राय तत्पुत्राय च स्वदितं स्वादुयुक्तं पितुम् अन्नं पच पक्वं कुरु ॥

(७०) अथाऽऽहवनीयदेशं प्रति गमनमन्त्रमाह—(प्राचीमिति-) हे अग्ने ! त्वं विद्वान् मार्गं जानन् प्राचीं प्रदिशमनु प्रागाख्यां प्रकृष्टां दिशमनुलक्ष्य प्रेहि प्रकर्षेण गच्छ । गत्वा चेहाऽऽयतने प्रथममाहितस्य गार्हपत्याग्नेः पुरोऽग्निः पूर्वदिग्वर्ती अग्निर्भव । ततो दीद्यानः प्रकाशमानो विश्वा आशाः सर्वा दिशो विभाहि विशेषेण प्रकाशय नोऽस्मदीयाय द्विपदे मनुष्याय चतुष्पदे पशवे च ऊर्जं धेहि रसमन्नं संपादय ॥

(७१) अथाऽऽहवनीयविषयं मन्त्रमाह—(अर्क इति-) अर्कः अर्च्यमानो मण्डलात्मा यश्चिरादित्यचक्षुः स्थानीयस्तदसौ दिवि दृश्यमानः सूर्यरूपः स सूर्यः अयमाधीयमान आहवनीयोऽग्निः । हे आहवनीयास्मदीयैः पशुभिः संप्रियो भव । हे शुक्र ! दीप्यमानाऽऽहवनीय ! ते त्वदीयं यच्छुक्रं वर्चः वह्निः प्रयतं दीप्तिरूपं तेजो या च शुक्रा तनूः ज्वालारूपं शरीरं यदपि अजस्रं शुक्रं ज्योतिः सर्वदा वर्तमानो ... तेन मे दीदिहि मां प्रकाशय । हे अग्ने ! ब्रह्मणा परिवृढेन—"अर्कश्चक्षु." इति मन्त्रेण तेन पूर्वोक्तगुणयुक्तेनाग्निनाऽऽहवनीयरूपेण त्वामिहाऽऽदधे ॥

(७२) अथाऽऽहितस्याग्नेरभिमन्त्रणमन्त्रमाह—(आनश इति-) अयमग्निः आनशे जाठराग्निरूपेण भोक्तृशरीरं व्याप्तवान् । तथा व्यानशे विविधं भोग्यजातं व्याप्तवान् । तथा सर्वमायुर्व्यानशे अपमृत्युपरिहारेण संपूर्णमायुः संपादितवान् ॥

(७३) कल्पः—"अथ यजमानः शिवा जपति"—(ये ते अग्न इति-) ये ते अग्ने! शिवे तनुवौ विराट् च स्वराट् च ते मा विशतां, ते मा जिन्वतां, ये ते अग्ने! शिवे तनुवौ सम्राट् चाभिभूश्च ते मा विशतां, ते मा जिन्वतां, ये ते अग्ने ! शिवे तनुवौ विभूश्च परिभूश्च ते मा विशतां, ते मा जिन्वतां, ये ते अग्ने शिवे तनुवौ प्रभ्वी च प्रभूतिश्च ते मा विशतां, ते मा जिन्वतां, यास्ते अग्ने! शिवास्तनुवस्ताभिस्त्वाऽऽदधे" इति । विराड्-

१ तै. ब्रा. १. १. ७. । २ आप. श्रौ. सू. ५. १५. १. ।

शिवे तनुवौ । सम्राट् चाभिभूश्च । ते मा विशतां ते मां जिन्वताम् । ये ते अग्ने शिवे तनुवौ । विभूश्च परिभूश्च । ते मा विशतां ते मां जिन्वताम् । ये ते अग्ने शिवे तनुवौ । प्रभ्वी च प्रभूतिश्च । ते मा विशतां ते मां जिन्वताम् । यास्ते अग्ने शिवास्तनुवः । ताभिस्त्वाऽऽदधे । यास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ ( ३ ) ॥

चतुर्भ्यदे त्रिंश्वतां तनुवश्चीणि च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

अथ प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ।

इमे वा एते लोका अग्नयः । ते यदव्यावृत्ता आधीयेरन् । शोचयेयुर्यजमानम् । घर्मः शिर इति गार्हपत्यमादधाति । वार्तः प्राण इत्यन्वाहार्यपचनम् । अर्कश्चक्षुरित्याहवनीयम् । तेनैवैनान्व्यावर्तयति । तथा न शोचयन्ति यजमानम् । रथंतरमभिगायते गार्हपत्य आधीयमाने । राथंतरो वा अयं लोकः । ( १ ) अस्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते । वामदेव्यमभिगायत उद्ध्रियमाणे । अन्तरिक्षं वै वामदेव्यम् । अन्तरिक्ष एवैनं प्रतिष्ठितमाधत्ते । अथो

विभिः प्रभूतिपर्यन्तैरुक्तानि शब्दैरुक्ता अग्ने शिवा शान्तास्तनुव । हेऽग्ने । ये त्वदीये विराट्स्वराडाद्ये ये शान्ते तनू ते उभे मा प्रविश्य प्रीणयताम् । एवमुत्तरत्रापि । विविधं राजत इति विराट् । स्वयमेव राजत इति स्वराट् । सम्यग्भासत इति सम्राट् । वैरिणोऽभिभवति इति अभिभूः । विशिष्टेन रूपेण भवतीति विभूः । परितो भवतीति परिभूः । आज्ञालक्षणेन प्रभुत्वेन युक्ता प्रभ्वी । प्रकृष्टैश्वर्येणोपेता प्रभूतिः । हेऽग्ने । या एतास्ते त्वदीयाः शिवास्तनुवस्ताभिः युक्तं त्वामिह आदधे ॥

( ७४ ) ( यास्त इति- ) बल्प —"यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छ इति यजमानो द्वेष्याय प्रदिशतीति" इति । घोरतनवः क्षुत्तृष्णादिरूपा । तथा चाऽऽरण्यककाण्डे समाम्नातम्—"यास्ते अग्ने घोरास्तनुव क्षुच्च तृष्णा च" इत्यादि । ताभिः घोराभिः तनुभिरमुं शत्रुं गच्छ प्राप्नुहि ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके सप्तमोऽनुवाकः ॥ ७ ॥

---

( ७५ ) आधानमन्त्रा सप्तमेऽभिहिताः । अष्टमे तद्ब्राह्मणमुच्यते । तत्र त्रीणामाधानमन्त्रान्विनियुङ्क्ते— ( इमे वा इति- ) एते त्रय अग्नयः त्रित्वसाम्यात् इमे त्रयो लोका भवन्ति । ते यदि परस्परम् अव्यावृत्ताः सङ्गता आधीयेरन् तदा दाहाधिक्येन यजमानं संतापयेयुः । अतस्त्रिभिर्मन्त्रैः पृथगादध्यात् । तेन व्यावृत्ता सन्तस्तापाधिक्याभावाद्यजमानं नैव संतापयन्ति ॥

( ७६ ) अथाऽऽधानकाले सामगानं विधत्ते—( रथन्तरमिति- ) "अभि त्वा शूर नोनुमः" इत्यस्यामृच्युत्पन्नं 'रथन्तरम्' । "कया नश्चित्र आभुवत्" इत्यस्यामुत्पन्नं 'वामदेव्यम्' । "तौमिदि दधानदे"

१ आप. श्रौ. सू. ५ १५ ३ । २ आ श्रौ. सू. ५. १. ४. । ३ ऋ. वे ८. ३. ४. ११. ४ तै. सं. २. ४. १४.

शान्तिर्वै वामदेव्यम् । शान्तमेवैनं पशव्यमुद्धरते । बृहदभिगायत आहवनीय आधीयमाने । बार्हतो वा असौ लोकः । अमुष्मिन्नेवैनं लोके प्रतिष्ठितमाधत्ते । प्रजापतिरग्निमसृजत । ( २ ) सोऽश्वो वारो भूत्वा पराङैत् । तं वारवन्तीयेनावारयत । तद्वारवन्तीयस्य वारवन्तीयत्वम् । श्यैतेन श्येती अकुरुत । तच्छ्यैतस्य श्यैतत्वम् । यद्वारवन्तीयमभिगायते । वारयित्वैवैनं प्रतिष्ठितमाधत्ते । श्यैतेन श्येती कुरुते । घर्मः शिर इति गार्हपत्यमादधाति । सशीर्षाणमेवैनमाधत्ते । ( ३ ) उपैनमुत्तरो यज्ञो नमति । रुद्रो वा एषः । यदग्निः । स आधीयमान ईश्वरो यजमानस्य पशून्हिꣳसितोः । संप्रियः पशुभिर्भुवदित्याह । पशुभिरेवैनꣳ संप्रियं करोति । पशूनामहिꣳसायै । छर्दिस्तोकाय तनयाय यच्छेत्याह । आशिषमेवैतामाशास्ते । वातः प्राण इत्यन्वाहार्यपचनम् । ( ४ ) सप्राणमेवैनमाधत्ते । स्वदितं तोकाय तनयाय पितुं पचेत्याह । अन्नमेवास्मै स्वदयति । प्राचीमनु प्रदिशं प्रेहि विद्वानित्याह । विभक्तिरेवैनयोः सा । अथो नानावीर्यावेवैनौ कुरुते । ऊर्जं नो धेहि द्विपदे चतुष्पद इत्याह । आशिषमे-

---

त्यस्यामृच्युत्पन्नं **'बृहत्'** रथन्तरादीनां भूरादिलोकभोगहेतुत्वात्तल्लोकरूपत्वम् । अत एतेषां गाने सति तत्तल्लोकेऽग्निः प्रतिष्ठितो भवति । अपि च वामदेव्यस्योपद्रवशान्तिकरत्वात्पशुप्राप्तिहेतुत्वाच्चैनमुद्ध्रियमाणमग्निं शान्तं पशुसाधनं च कृत्वोद्धरति ॥

( ७७ ) पुनरपि सामद्वयं विधत्ते—(प्रजापतिरिति–) यः प्रजापतिना सृष्टोऽग्निः **स वारः अश्वो** भूत्वा पुनरावृत्तिरहितः पलायनमकरोत् । यो हस्तद्वयेन वालेन गृहीत्वा बलान्निवारणीयः स **वारः** तं वारमश्वं पलायमानं **वारवन्तीयेन** साम्ना प्रजापतिर्निवारयामास । "अश्वं न त्वा वारवन्तम्" इत्यस्यामृच्युत्पन्नं **'वारवन्तीयम्'** । निवारणहेतुत्वात्तस्य वारवन्तीयं नाम संपन्नम् । निवारितमश्वं श्यैतसाम्ना श्येतीकृतवान्स्वाधीनं कृतवानित्यर्थः । "अभि प्र वः सुराधसम्" इत्यस्यामृच्युत्पन्नं **श्यैतम्** । स्वाधीनकरणहेतुत्वात्तस्य श्यैतनाम संपन्नम् । अतो वारवन्तीयसाम्ना पलायनं निवार्य प्रतिष्ठितमग्निमाधाय श्यैतगानेनाग्निं स्वाधीनं करोति ॥

( ७८ ) आधानमन्त्रे शिर शब्दतात्पर्यं दर्शयति—(**घर्मः शिर इति**–) अग्नेः शिरःसहितत्वे सति न्यूनत्वाभावादुत्तरो दर्शपूर्णमाससोमादिरेनं प्राप्नोति ॥

( ७९ ) संप्रियशब्दतात्पर्यं दर्शयति—(**रुद्रो वा एष इति**–) आधीयमानस्याग्नेः क्रूरत्वेन पशून्हिंसितुं समर्थत्वादहिंसार्थं पशुभिः सह संप्रीतिं मन्त्रेण करोति ॥

( ८० ) यच्छेति पदस्याऽऽशीरर्थं दर्शयति—(**छर्दिरिति**–) ॥

( ८१ ) प्राणशब्दस्य तात्पर्यं दर्शयति—(**वात इति**–) ॥

( ८२ ) स्वदितपितुशब्दयोस्तात्पर्यं दर्शयति—(**स्वदितमिति**–) ॥

( ८३ ) प्राचीं प्रेहीति पदद्वयस्य तात्पर्यं दर्शयति—(**प्राचीमिति**–) येयं प्राच्यां दिशि गतिरयमेवैनयोराहवनीयगार्हपत्ययोर्विभागः । अपि च विभागे सति पूर्वोक्तरीत्या द्वयोः पृथक्सामर्थ्यं भवति ॥

( ८४ ) धेहीति पदस्याशीरर्थत्वं दर्शयति—(**ऊर्जं नो धेहीति**–) ॥

वैतामाशास्ते । [८५]अर्कश्चक्षुरित्याहवनीयम् । अर्को वै देवानामन्नम् । (५) अन्नमेवावरुन्द्धे । [८६]तेन मे दीदिहीत्याह । समिन्ध एवैनम् । [८७]आनशे व्यानश इति त्रिरुदिङ्गयति । त्रय इमे लोकाः । एष्वेवैनं लोकेषु प्रतिष्ठितमाधत्ते । [८८]तत्तथा न कार्यम् । वीङ्गितमप्रतिष्ठितमादधीत । उद्धृत्यैवाऽऽधायाभिमन्त्र्यः । अवीङ्गितमेवैनं प्रतिष्ठितमाधत्ते । [८९]विराट् च स्वराट् च यास्ते अग्ने शिवास्तनुवस्ताभिस्त्वाऽऽदध इत्याह । एता वा अग्नेः शिवास्तनुवः । ताभिरेवैनꣳ समर्धयति । [९०]यास्ते अग्ने घोरास्तनुवस्ताभिरमुं गच्छेति ब्रूयाद्यं द्विष्यात् । ताभिरेवैनं पराभावयति (६) ॥

लोकोऽसृजतैनमाधत्तेऽन्वाहार्यपचनं देवानामन्नमेवैनं प्रतिष्ठितमाधत्ते पञ्च च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

(८५) अर्कशब्दस्य तात्पर्यं दर्शयति—(अर्क इति-) अर्चनीयत्वव्युत्पत्त्या देवानामन्नकारित्वादन्नप्राप्तिः ॥

(८६) दीदिहिशब्दस्य समिन्धनार्थत्वं दर्शयति—(तेनेति-) ॥

(८७) पूर्वपक्षहेतुत्वेन मन्त्रस्य कंचिद्विनियोगं दर्शयति—(आनश इति-) हस्ते धृतस्याग्नेस्त्रिवारमूर्ध्वचलनेन लोकत्रयप्रतिष्ठा ॥

(८८) तमेतं दूषयित्वा विनियोगान्तरं दर्शयति—(तत्तथेति-) त्रिरूर्ध्वचलनेन **वीङ्गितं** विविधं चालितम् **अप्रतिष्ठितम्** अग्निमाहितवान्भवेत् । तस्मात्तथोर्ध्वचलनं न **कार्यम्** । किं तु हस्ते सकृद् **उद्धृत्यैव** आयतने तमग्निम् **आधाय** पश्चात्सोऽग्निरनेन मन्त्रेण मन्त्रणीयः । तथा सति विविधचलनरहितं स्थिरत्वेन प्रतिष्ठितमग्निमाहितवान्भवति ॥

(८९) विराडादिशब्दानां तात्पर्यं दर्शयति—(विराडिति-) ॥

(९०) मन्त्रान्तरं विनियुङ्क्ते—(यास्त इति-) यं पुरुषमसौ यजमानो **द्विष्यात्** तं मत्वैतं मन्त्रं **ब्रूयात्** । तथा सति **ताभिरेव** घोराभिस्तनुभिः एनं द्वेष्यं विनाशयति ॥

अथ **मीमांसा**—दशमाध्यायस्याष्टमपादे चिन्तितम्—"उपवीतो ब्रह्मगानस्य निषेधो विहितस्तुतिः । विधिः सिद्धो वा स्तुत्योऽपि वपोत्खेद इव स्तुतिः ॥ विध्यनन्वयतोऽस्तोत्रं ब्रह्मोद्गाता तथा सति । विषयैक्याद्विकल्पोऽत्र षोडशिग्रहवन्मतः" ॥ आधाने वामदेव्यादिसाम्नां गानानि विहितानि । आधान एवेदमपरमाम्नायते—"उपवीता वा एतस्याग्नयो भवन्ति यस्याग्न्याधेये ब्रह्मा सामानि गायति" इति । उपशब्दः सामीप्यं ब्रूते । वीता विगताः कालविलम्बमन्तरेण परित्यक्ता इत्यर्थः । अनया निन्दया ब्रह्मणः सामगाननिषेध उन्नीयते । स निषेध उद्गातृविहितं वामदेव्यादिसामगानं स्तौति । ननु ब्रह्मणः सामगानमप्रसक्तम् । अतस्तन्निषेधोऽत्यन्तासंभावितत्वाच्छशविषाणवच्छून्यः । न हि वन्ध्यापुत्रो वा तद्वधो वा संपादयितुं शक्यते । तथा सति तादृशेन निषेधेन कथं स्तुतिरिति चेत् । वपोत्खेदवदिति ब्रूमः । स आत्मनो वपामुदखिददित्यनेनात्यन्तासंभावितार्थेन यथा प्राजापत्यस्य तूपरस्याजस्य विधिः स्तूयते तद्वदिति प्राप्ते ब्रूमः—नेदं वामदेव्यादि साम विधीनां स्तोत्रं भवितुमर्हति । विधीनामनेकत्वेन स्वस्वसंनिधिपठितैरर्थवादैर्निराकाङ्क्षत्वेन च तदन्वयायोगात् । का तर्ह्यस्य वाक्यस्य गतिरिति चेत् । उच्यते । ब्रह्मशब्दोऽत्र विप्रत्वजातिद्वारेणोद्गातारं ब्रूते । तस्य च गानं प्रसक्तं तस्मिन्निषेधे सति विधिनिषेधाभ्यामेकविषयाभ्यामुद्गातुर्गानं विकल्प्यते ॥

---

१ जै. न्या. मा. १०. ८. ६. । २ 'ग्नुर्विहिँ' इति पाठान्तरम् । ३ सतम्° इति पाठः ।

अथ प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ।

शमीगर्भादग्निं मन्थति । एषा वा अग्नेर्यज्ञिया तनूः । तामेवास्मै जनयति । अदितिः पुत्रकामा । साध्येभ्यो देवेभ्यो ब्रह्मौदनमपचत् । तस्या उच्छेषणमददुः । तत्प्राऽऽश्नात् । सा रेतोऽधत्त । तस्यै धाता चार्यमा चाजायेताम् । सा द्वितीयमपचत् ( १ ) । तस्या उच्छेषणमददुः । तत्प्राऽऽश्नात् । सा रेतोऽधत्त । तस्यै मित्रश्च वरुणश्चाजायेताम् । सा तृतीयमपचत् । तस्या उच्छेषणमददुः । तत्प्राऽऽश्नात् । सा रेतोऽधत्त । तस्या अꣳशश्च भगश्चाजायेताम् । सा चतुर्थमपचत् ( २ ) । तस्या उच्छेषणमददुः । तत्प्राऽऽश्नात् । सा रेतोऽधत्त । तस्या इन्द्रश्च विवस्वाꣳश्चाजायेताम् । ब्रह्मौदनं पचति । रेत एव तद्दधाति । प्राश्नन्ति ब्राह्मणा ओदनम् । यदाज्यमुच्छिष्यते । तेन समि-

एकादशाध्यायस्य तृतीयपादे चिन्तितम्—"प्रतिकर्म पृथक्कार्यमाधानं यदि वा सकृत् । अन्यार्थवत्पृथक्नैव स्वकालत्वसमत्वत" ॥ 'वसन्ते ब्राह्मणोऽग्निमादधीत' इति विहितमाधानं प्रयाजाद्यङ्गवत्प्रतिकर्म पृथक्कार्यमिति चेत्, मैवम् । आधानस्य स्वातन्त्र्येण वसन्तादिकाले विहिते तत्तत्कर्मकालेषु पृथगनुष्ठानायोगात् । स्वकालेऽनुष्ठितस्य सर्वैः कर्मभिः संबन्धः समानः । न च प्रकरणेन विशेषो नियन्तुं शक्यः । आधानस्यानारभ्याधीतत्वात् । "आहवनीये जुहोति" इत्यादिवाक्येन लौकिकपाशुकसौमिकदार्विकहोमेषु संबन्धः साधारणः प्रतिपाद्यते । तस्मात्तन्त्रेणानुष्ठेयम् । यद्यप्याधानं नेष्ट्यादिकर्मणा साक्षादङ्गं तथाऽपि फलाभावादाहवनीयादिद्वारा कर्मोपकारित्वादङ्गत्वमभ्युपेत्यैव चिन्ता ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठकेऽष्टमोऽनुवाकः ॥ ८ ॥

---

( ९१ ) अष्टम आधानमन्त्रव्याख्यानमुक्तम् । अथ नवमे ब्रह्मौदनमुच्यते । तत्राऽऽदौ तावद्ब्रह्मौदनादपराचीनमाधानात्प्राचीनमग्निमन्थनमुच्यते । यदुक्तं सूत्रकारेण—"ब्राह्मौदनिकादुल्मुकापोह्य तस्मिञ्शमीगर्भादग्निं मन्थति" इति । तदिदं विधत्ते—(शमीगर्भादिति–) आधानदिनात्पूर्वद्युर्ब्रह्मौदनं पक्त्वाऽपरेद्युरुदयात्पूर्वं तस्माद्ब्राह्मौदनिकात् अग्नेः भस्मापोह्य तस्मिन्स्थाने शमीवृक्षस्य गर्भगतेनाश्वत्थेन निष्पादितामरणिमवस्थाप्य अग्निं मन्थेत् । तस्मात् शमीगर्भात् उत्पन्ना याऽग्नेस्तनूरेषा यज्ञार्हाऽत तामेव जनयति ॥

( ९२ ) अथ ब्रह्मौदनं विधत्ते—(अदितिरिति–) ब्रह्माणं देवमुद्दिश्य होमार्थं ब्राह्मणानामृत्विजां प्राशनार्थं च पच्यमान ओदनो ब्रह्मौदनः, तं कदाचित् अदितिः देवी पुत्रकामा सती साध्येभ्यो देवेभ्यः उत्पादनीयधातादिदेवतार्थम् अपचत् । तदानीमृत्विजो होमं प्राशनं च कृत्वा शिष्टमोदनं तस्या अदितये प्रायच्छन् । सा च तत् उच्छेषणं प्राश्य गर्भम् आधत्त । तस्माद्गर्भाद्द्वादशादित्यानामादिभूतौ धाता चार्यमा चेत्युभावजायेताम् । एवमुत्तरेषु त्रिष्वपि पर्यायेषु योज्यम् । तस्मादाधिसु ब्रह्मौदनं पचेत् । तेन पुनोत्पादकं रेत एव तद्दधाति ॥

( ९३ ) ऋत्विजां प्राशनं विधत्ते—(प्राश्नन्तीति–) ॥

( ९४ ) तस्मात् ब्रह्मौदनात्पूर्वं समिदाधानं विधत्ते—(यदिति–) ॥

---

१ °चेत् न, आ° इति पाठः । २ °भेयुपयोगः स° इति पाठः । ३ °कारत्वाच्चा° इति पाठः ।
४ आप. श्रौ. सू. ५ । १० । ७ ।

घ्रोऽभ्यज्याऽऽदधाति । उच्छेषणाद्वा अदिती रेतोऽधत्त (३) । उच्छेषणादेव तद्रेतो धत्ते । अस्थि वा एतत् । यत्समिधः । एतद्रेतः । यदाज्यम् । यदाज्येन समिधोऽभ्यज्याऽऽदधाति । अस्थ्येव तद्रेतसि दधाति । तिस्र आदधाति मिथुनत्वाय । इयतीर्भवन्ति । प्रजापतिना यज्ञमुखेन संमिताः (४) । इयतीर्भवन्ति । यज्ञपरुषा संमिताः । इयतीर्भवन्ति । एतावद्वै पुरुषे वीर्यम् । वीर्यसंमिताः । आर्द्रा भवन्ति । आर्द्रमिव हि रेतः सिच्यते । [1] चित्रियस्याश्वत्थस्याऽऽदधाति । चित्रमेव भवति । घृतवतीभिरादधाति (५) । एतद्वा अग्नेः प्रियं धाम । यद्घृतम् । प्रियेणैवैनं धाम्ना समर्धयति । अथो तेजसा । गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात् । गायत्रछन्दा वै ब्राह्मणः । स्वस्य छन्दसः प्रत्ययनुस्त्वाय । त्रिष्टुभी राजन्यस्य । त्रिष्टुप्छन्दा वै राजन्यः । स्वस्य छन्दसः प्रत्ययनुस्त्वाय (६) । जगतीभिर्वैश्यस्य । जगतीछन्दा वै वैश्यः । स्वस्य छन्दसः प्रत्ययनुस्त्वाय । [2] तं संवत्सरं गोपायेत् । संवत्सरं

(९५) होमोच्छिष्टं समिदञ्जनसाधनमाज्यं प्रशस्य तेनाभ्यक्तां समिधं प्रशंसति—(अस्थि वा एतदिति-) काठिन्यसाम्यात्समिधामस्थित्वम् ॥

(९६) समित्संख्यां विधत्ते—(तिस्र इति-) सपुत्रयोर्मातापित्रोर्मिथुनरूपयोस्त्रित्वसाम्यम् । अत एवान्यत्राऽऽम्नातम्—"माता पिता पुत्रस्तदेव तन्मिथुनम्" इति ॥

(९७) प्रादेशाभिनयेन समिधां परिमाणं विधत्ते—(इयतीभिरिति-) इयत्त्वं प्रादेशमात्रा परिमिता प्रजापत्यवतारस्य यज्ञपुरुषस्य मुखं मूर्धानमारभ्य चुबुकपर्यन्तं प्रादेशपरिमितं भवति । अतस्तत्तुल्यत्वम् । यज्ञस्य परुः पर्वावयवविशेषः पवित्ररूपः । तस्य च प्रादेशप्रमाणं तन्मन्त्रे समाम्नातम्—"निष्पलाशे दर्भे प्रादेशसंमिते" इति । अतो यज्ञपरुषा तुल्यत्वम् । किं च पुरुषविशेषे खलु श्रोत्रादिस्थानेन्द्रियसामर्थ्यं प्रादेशपरिमिते मुखे वर्तते । अतस्तेन वीर्येण तुल्यत्वम् ॥

(९८) तासां समिधां शुष्कत्वं वारयितुं विधत्ते—(आर्द्रा इति-) इव शब्द एवकारार्थः ॥

(९९) समिधां वृक्षविशेषं विधत्ते—(चित्रियस्येति-) अश्वत्थप्रभवोऽश्वत्थश्चित्रिय इत्युच्यते । योऽश्वत्थो ग्रामादेश्चिह्नीभूतस्तदीयाः समिध आदध्यात् । तेन विचित्रमेव ऐश्वर्यं भवति ॥

(१००) समिदाधानार्थां ऋग्विशेषान्विधत्ते—(घृतवतीभिरिति-) घृतशब्दो यास्वृक्षु विद्यते ता घृतवत्यः । घृतैर्बोधयतातिथिमित्येवं घृतशब्दस्तत्र श्रूयते । घृतेन ज्वालाभिर्वृद्धेरग्नेः प्रियत्वम् । अतस्तेन घृतयुक्तेन मन्त्रेण समिध आदधानः प्रियेण स्थानेन समृद्धो भवति । अपि च तेजसा समृद्धो भवति ॥

(१०१) अधिकारिभेदाद्व्यवस्थां विधत्ते—(गायत्रीभिरिति-) "समिधाऽग्निं दुवस्यत" इत्याद्या गायत्र्यः । "समिध्यमानः प्रथमोऽनु धर्मः" इत्याद्यास्त्रिष्टुभः । "त्वामग्ने समिधानम्" इत्याद्या जगत्यः । एताश्चोपरितनप्रपाठके आम्नास्यन्ते । गायत्रीब्राह्मणयोरेकमुखजन्यत्वं संबन्धः । अतः स्वकीयस्यैव गायत्रीछन्दसः प्रत्ययनस्त्वाय पुनः प्राप्तये गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात् । एवमुत्तरयोर्योजनीयम् ॥

(१०२) समिद्धस्य प्राचीनस्याग्नेश्चिरावस्थानं विधत्ते—(तं संवत्सरमिति-) यथा गर्भाशये स्थापितं रेतः संवत्सरं वर्धते तस्मादग्निरप्यस्य गर्भस्य वृद्धये संवत्सरमभिरक्षेत् ॥

१ तै. ब्रा. १ ६ ३. । २ तै. ब्रा. १. ५ ४. । ३ तै. ब्रा. १ २ १ ।

हि रेतो हितं वर्धते । [१०३]यद्येनꣳ संवत्सरे नोपनमेत् । समिधः पुनरादध्यात् । रेत एव तद्धितं वर्धमानमेति । [१०४]न माꣳसमश्नीयात् । न स्त्रियमुपेयात् (७) । [१०५]यन्माꣳसमश्नीयात् । यत्स्त्रियमुपेयात् । निर्वीर्यः स्यात् । नैनमग्निरुपनमेत् । [१०६]श्वो ऽग्निमाधास्यमानो ब्रह्मौदनं पचति । आदित्या वा इत उत्तमाः सुवर्गं लोकमायन् । ते वा इतो यन्तं प्रतिनुदन्ते । एते खलु वावाऽऽदित्याः । यद्ब्राह्मणाः । तैरेव संत्वं गच्छति (८) । नैनं प्रतिनुदन्ते । [१०७]ब्रह्मवादिनो वदन्ति । क्व सः । अग्निः कार्यः । योऽस्य प्रजां पशून्प्रजनयतीति । शल्कैस्ताꣳ रात्रिमग्निमिन्धीत । तस्मिन्नुपव्युषमरणी निष्टपेत् । यथर्षभाय वाशितान्यावित्छायति । तादृगेव तत् । [१०८]अपोदूह्य भस्माग्निं मन्थति (९) । सैव साऽग्नेः संततिः । [१०९]तं मथित्वा प्राञ्चमुद्धरति । संवत्सरमेव तद्रेतो हितं प्रजनयति ।

---

( १०३ ) यदुक्तं सूत्रकारेण—"[१]यद्येनꣳसंवत्सरेऽग्न्याधेयं नोपनमेद्ब्रह्मौदनं पक्त्वा समिध आधाय यदैनमुपनमेदथाऽऽदधीत" इति । तदिदं विधत्ते—(यद्येनमिति-) केनापि द्रव्यराहित्यादिना निमित्तेनास्य यजमानस्याग्न्याधेयप्राप्तिर्यदि न स्यात्तदा संवत्सरमपि तस्मिन्ब्रह्मौदनिकेऽग्नौ समिधः आधाय तत्सिद्धिपर्यन्तं गोपायेत् । तेन गर्भाशये स्थापितं रेतः संवत्सरं वर्धते । तस्मादग्निरूपस्य गर्भस्य वृद्धये संवत्सरमभिरक्षेत् । तेन गर्भाशये स्थापितं वर्धमानं रेतः प्राप्नोति ॥

( १०४ ) ब्रह्मौदनिकस्य रक्षणकर्तुर्नियमविशेषं विधत्ते—(न माꣳसमिति-) ॥

( १०५ ) व्यतिरेकमुखेन नियमं प्रशंसति—(यन्माꣳसमिति-) आग्न्याधेयं न प्राप्नुयादित्यर्थः ॥

( १०६ ) आधानदिनात्पूर्वदिने पुनर्ब्रह्मौदनं विधत्ते—(श्व इति-) पुरा कदाचित् आदित्याः इतः भूलोकादुत्तमाः स्वर्गं प्राप्ताः । ते चान्यं पुरुषमितः स्वर्गं गच्छन्तं प्रतिषध्नन्ति भूलोकवर्तित्वात् । ब्राह्मणा एवादितिसंबन्धादादित्याः । अनेन ब्रह्मौदनेन तुष्टैर्ब्राह्मणैरादित्यैः सह स्वर्गप्राप्ती संगतत्वं गच्छति । तत एनं न प्रतिषध्नन्ति ॥

( १०७ ) तस्य ब्रह्मौदनिकाग्नेः समिन्धनं प्रसिद्धस्यारणिप्रतापनं च विधत्ते—(ब्रह्मवादिन इति-) आधातव्यो योऽग्निरस्य आहिताग्नये प्रजां पशूंश्च संपादयति—सोऽग्निः क्व कार्यः कुत्र संपादनीय इति ब्रह्मवादिनां प्रश्नः । तस्यैतदुत्तरम् । तस्यां रात्रौ निरन्तरं तस्मिन्काष्ठलेशैरग्निं समिध्य तस्मिन्नग्नावुषःकालसमीपे मन्थनसाधनमरणिद्वयं निष्टपेन्निःशेषेण तपेत् । तेन स ब्रह्मौदनिकोऽग्निररण्योः प्रविशति । यथा लोके कर्मविषयभाय स्त्रियानि वाशितानि किंकिट्यादिशब्दजातानि तदागमनाय विशेषेण संपादयन्ति । तद्वदरणिप्रतापनं तादृगेवेति द्रष्टव्यम् ॥

( १०८ ) अथ देशविशेषे मन्थनं विधत्ते—(अपोदूह्येति-) ब्रह्मौदनिकाग्नेरंगारभस्मानि अपोदूह्य निःसार्य तस्मिन्स्थाने तत्राभ्याशमरणीभ्यामग्निं मन्थेत् । तस्मिन्स्थाने येयं मन्थनक्रिया सैव ब्रह्मौदनिकस्याग्नेः उत्पद्यमानेनाग्निना सह सा संततिः तयाग्नेर्विच्छेदाभावः ॥

(१०९) मथितस्याग्नेर्गार्हपत्यायतनार्थमुद्धरणं विधत्ते—(तमिति-) अरण्युपन्नं मथितमग्निं कस्मिंश्चित्पात्रे प्राञ्चमुद्धरति । न तु प्रत्यञ्चम् । यथा लोके संवत्सरं गर्भं धृत्वा रेतः अन्ते प्रजनयति तद्वदेतद्भवति ॥

---

१ आप. श्रौ. सू. ५. ५. १२. ।

[110] अनाहितस्तस्याग्निरित्याहुः । यः समिधोऽनाधायाग्निमाधत्त इति । ताः संवत्सरे पुरस्तादादध्यात् । संवत्सरादेवैनमवरुध्याऽऽधत्ते । [111] यदि संवत्सरे नाऽऽदध्यात् । द्वादश्यां पुरस्तादादध्यात् । संवत्सरप्रतिमा वै द्वादश रात्रयः । संवत्सरमेवास्याऽऽहिता भवन्ति । [112] यदि द्वादश्यां नाऽऽदध्यात् । त्र्यहे पुरस्तादादध्यात् । आहिता एवास्य भवन्ति ( १० ) ॥

द्वितीयमपञ्चचतुर्थमेषद्दित्तीरेतोऽधत्त संमिता घृतवतीभिरादधाति राजन्यः
स्वस्य छन्दसः प्रसवनुरन्वायैवाद्रष्टव्यति अभ्यति रात्रयश्चत्वारि च ।
इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

अथ प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ।

[113] प्रजापतिः प्रजा असृजत । स रिरिचानोऽमन्यत । स तपोऽतप्यत । स आत्मन्वीर्यमपश्यत् । तदवर्धत । तदस्मात्सहसोर्ध्वमसृज्यत । सा विराडभवत् । तां देवासुरा व्यगृह्णत । सोऽब्रवीत्प्रजापतिः । मम वा एषा ( १ ) । दोहा एव युष्माकमिति । [114] सा ततः प्राच्युदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अथर्वं पितुं मे गोपायेति । सा द्वितीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् ।

( ११० ) प्राजापत्यैर्विकैर्जागर्म्यादिभिर्मन्त्रैः समिदाधानविधौ विहितपक्षस्यैव पक्षान्तरविधानाय पुनः परामृशति—(अनाहित इति-) समिदाधानाभावे कृतमप्याधानमकृतमेव स्यादित्यभिज्ञा आहुः । तस्मादाधानात्पुरस्तात्संवत्सरपरिमिते काले समिदाधानं मुख्यः पक्षः ॥

( १११ ) तमेतं मुख्यं पक्षमनूद्य तदसंभवेऽनुकल्पं विधत्ते—(यदीति-) आधानादेनमारभ्याधस्तनतिथिगणनायां या द्वादशसंख्यापूरणी तिथिस्तस्यां ताः समिध आदध्यात् । द्वादशानां रात्रीणां मासस्थानीयत्वेन मितिक्रिया संवत्सरसादृश्यम् ॥

( ११२ ) पुनरप्यसंभवेऽनुकल्पान्तरं विधत्ते—(यदीति-) पूर्ववद्व्याख्येयम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये
प्रथमकाण्डे प्रथमप्रपाठके नवमोऽनुवाकः ॥ ९ ॥

(११३) नवमे समिदाधानोऽभिहितः । अथ दशमे पवमानेष्ट्याधानमभिधीयते । पूर्वं पञ्चमेऽनुवाके यत्रैवाऽग्निराधीयत इत्यग्न्याधानपक्ष एवाभिहितः । इह तु पयस्याधानं विधातुमाख्यायिकामाह—(प्रजापतिरिति-) प्रजापतिः प्रजाः सृष्ट्वा शरीरस्य वीर्यस्योपक्षयेण रिक्तोऽहमिति मत्वा वीर्यलाभाय स तपः तप्त्वा स्वात्मनि किंचित् वीर्यमपश्यत् । तत् च वीर्यं कालेन अवर्धत तत्प्रवृद्धं वीर्यं धारयितुमशक्यं तच्छीघ्रमेवास्मात्प्रजापतेरूर्ध्वं निर्गत्य केनचिद्रूपेण सृष्टमभूत् । सा सृष्टा निष्पन्ना विविधं राजमाना कामधेनुरभवत् । तामुद्दिश्य देवाः च असुराः च वयमेवैतां गृह्णीम इत्येवं परस्परं विग्रहमकुर्वन् । तदा विग्रहशान्तये प्रजापतिः एवम् अब्रवीत् । एषा गौः ममैव इति युष्माकं तु दोहा एव क्षीराण्येवेति ॥

( ११४ ) अथ पयस्युत्क्रान्तिप्रकारं दर्शयति—(सेति-) येयं गौः प्रजापतिना स्वार्थत्वेन स्वीकृता विराट् सा प्रजापतेः सकाशात्प्राङ्मुखी सत्युदक्रामत् । तदा प्रजापतिरथर्वेति मन्त्रेण तां विराजं परितो निरुद्धवान् । हे अथर्व ! धनुर्वेदस्य प्रवर्तकाचार्यरूप ! दक्षिणात्मे ! यद्वा हिंसारहित ! मे पितुं नवीनमन्नं गोपाय । एव-

नर्यं प्रजां मे गोपायेति । सा तृतीयमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । शꣳस्य पशून्मे गोपायेति (२) । सा चतुर्थमुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । सप्रथ सभां मे गोपायेति । सा पञ्चममुदक्रामत् । तत्प्रजापतिः पर्यगृह्णात् । अहे बुध्निय मन्त्रं मे गोपायेति । अग्नीन्वाव सा तान्व्यक्रमत । तान्प्रजापतिः पर्यगृह्णात् । अथो पङ्क्तिमेव । पङ्क्तिर्वा एषा ब्राह्मणे प्रविष्टा (३) । तामात्मनोऽधि निर्मिमीते । यदग्नीराधीयते । तस्मादेतावन्तोऽग्नय आधीयन्ते । पाङ्क्तं वा इदꣳ सर्वम् । पाङ्क्तेनैव पाङ्क्तꣳ स्पृणोति । अथर्व पितुं मे गोपायेत्याह । अन्नमेवैतेन स्पृणोति । नर्य प्रजां मे गोपायेत्याह । प्रजामेवैतेन स्पृणोति । शꣳस्य पशून्मे गोपायेत्याह (४) । पशूनेवैतेन स्पृणोति । सप्रथ सभां मे गोपायेत्याह । सभामेवैतेनेन्द्रियꣳ स्पृणोति । अहे बुध्निय मन्त्रं मे गोपायेत्याह । मन्त्रमेवैतेन श्रियꣳ स्पृणोति । यदन्वाहार्यपचनेऽन्वाहार्यं पचन्ति । तेन सोऽस्याभीष्टः प्रीतः । यद्गार्हपत्य आज्यमधिश्रयन्ति संपत्नीर्याजयन्ति । तेन सोऽस्याभीष्टः प्रीतः । यदाहवनीये जुह्वति (५) । तेन सोऽस्याभीष्टः प्रीतः । यत्सभायां विजयन्ते । तेन सोऽस्याभीष्टः

---

हुतशेषु चतुर्षु पर्यायेषु योऽन्यम् । नरेभ्यो मनुष्येभ्यो हितो नर्यो गार्हपत्यः । ऋत्विग्भिः प्रशंसनीयत्वाच्छंस्य आहवनीयः । प्रथसा कीर्त्या सह वर्तमानत्वात्सप्रथः सभ्यः । अहिरसत्त्वाद्बुध्ने मूले जगदाधारभूतत्वाद्बुध्नियः आवसथ्यः ऋगादिमन्त्र । इत्थं सैव विराट् तानग्नीन्पञ्चधा विवेक्तुं पञ्चवारं व्यक्रामत् । तान्पञ्चाग्नीन्प्रजापतिः परितः स्वीकृतवान् । अपि च क्रमेणावस्थानात्पञ्चसंख्यान्वयाद्वा पङ्क्तिमेव तावदग्निविषयां गृहीतवान् ॥

(११५) इदानीं विधत्ते—(पङ्क्तिरिति-) पूर्वोक्तानामथर्वादीनां मन्त्राणां ब्राह्मणेनाधीतत्वात्प्रजापतिप्रतिपाद्यत्वाद्वा पङ्क्तिः [ब्राह्मणे] विप्रे प्रविष्टा । तथा सत्यग्न्याधानेन ताम् पङ्क्तिं तस्मादुत्पादयति । तस्मादेतावन्तः पञ्चाग्नय आधातव्याः । यत् इदं मनुष्यपश्वादिरूपं जगत् सर्वं पञ्चसंख्योपेतत्वात् पाङ्क्तम् । शिरो हस्तौ पादौ चेत्येवं मनुष्याणां पञ्चावयवाः । शिरसा पुच्छेन वा सह चत्वारः पादाः पशूनां पञ्चावयवाः । अतः पञ्चसंख्यायुक्तेनैवाग्निना पञ्चसंख्यायुक्तं जगत्प्रीणयति ॥

(११६) अथ मन्त्राणां तात्पर्यं क्रमेण दर्शयति—(अथर्वेति-) मन्त्रे तावदिन्द्रियात्र हविरभिधानादिन्द्रियप्रीतिः । सा हि श्रीरित्यभिधानाच्छ्रियः प्रीतिः ।

(११७) पञ्चानामग्नीनां पृथगुपयोगं दर्शयन्प्रशंसति—(यदिति-) दर्शपूर्णमासकर्मणि ऋत्विजामनु दक्षिणार्थं आह्रियत इत्योदनोऽन्वाहार्यः । स च पच्यते यस्मिन्दक्षिणाग्नौ सोऽयम् अन्वाहार्यपचनः । तेन ओदनपाकेनोपकृतः यात् सः दक्षिणाग्निरस्य यजमानस्य अभीष्टः अपि भवति । एतादृशपरिचर्यया प्रीतः च भवति । एवमुत्तरत्रापि । गार्हपत्ये हि आज्यं विलापयन्ति । देवपत्नीः च संयाजयन्ति । अतः पत्नीभिः संयाजसहितेन संयुक्त इति गार्हपत्यः । प्रधानाहुतिं जुहोत्यस्मिन्निति आहवनीयः । अथ सभायां मध्येऽधिदेवनमुद्धत्यादिना द्यूतविजयः सुपेक्षितः । तां द्यूतसभामर्हतीति सभ्यः । "तेदयं संस्कृत

---

१ आप. श्रौ. सू. ५. १०. २-३.

प्रीतः । यदावसथेऽन्नꣳ हरन्ति । तेन सोऽस्याभीष्टः प्रीतः । तथाऽस्य सर्वे प्रीता अभीष्टा आधीयन्ते । प्रवसथमेष्यन्नेवमुपतिष्ठेतैकमेकम् । यथा ब्राह्मणाय गृहेवासिने परिदाय गृहानेति । तादृगेव तत् । पुनरागत्योपतिष्ठते । साभागेयमेवैषां तत् । सा तत ऊर्ध्वाऽऽरोहत् । सा रोहिण्यभवत् । तद्रोहिण्यै रोहिणित्वम् । रोहिण्यामग्निमादधीत । स्व एवैनं योनौ प्रतिष्ठितमाधत्ते । ऋध्नोत्येनेन ( ६ ) ॥

एषा प्रजं मे गोपायेति शंविंश प्रजं मे गोपायेत्याह श्रुधि तिष्ठते सप्त च ।

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

समासस्य उपहरन्त्यावसथे भुञ्जते" इति सूत्रेऽन्नहरणमुक्तम् । तद्गृहमावसथः । तमर्हतीति आवसथ्यः । तेनोक्तप्रकारेण सर्वेऽप्यग्नयोऽस्य यजमानस्य प्रीतिपूर्वकमभीष्टं संपादयन्त आहिता भवन्ति ॥

( ११८ ) पूर्वोक्तरथवं पितुमित्यादिमन्त्ररुपस्थानं विधत्ते—(प्रवसथमिति–) आहिताग्निर्यदा देशान्तरं गमिष्यति तदा पूर्ववदुपतिष्ठेत । पूर्वत्र प्रजापतिर्विराजः क्रमेणाथर्वपितुमित्यादिमन्त्रैर्विराजं परिगृहीतवानित्यर्थवाद उक्तः । तेनायं वादेनाऽऽधानकालीनस्योपस्थानस्य विधिर्ज्ञेयः । अत एव सूत्रकार आधानादूर्ध्वं प्रवसनेष्टिभ्यः पूर्वमेतदुवाच—"अथ विराड्भिर्यजमान उपतिष्ठते, अथर्व पितुं मे गोपाय" इत्यादि । अत आधानकालीनमुपस्थानं दृष्टान्तीकर्तुमेवायमित्युक्तम् । यथा लोके गृहस्वामी कश्चिदन्यं कंचिद्ब्राह्मणं गृहरक्षार्थं वासयित्वा तस्मै ब्राह्मणाय गृहान् परिदाय तमेवमेवं रक्षेति बुद्धिप्रदानं कृत्वा ग्रामान्तरे गच्छति तादृगेव तत् उपस्थानं द्रष्टव्यम् ॥

( ११९ ) उपस्थानान्तरं विधत्ते—(पुनरिति–) ग्रामान्तरादागत्य पुनरप्याहिताग्निरथर्वपितुमित्यादिमन्त्रैरुपतिष्ठेत ते च प्रत्येकमुपस्थानमन्त्राः । संप्योपस्थानमन्त्रस्तु यथाऽऽग्नेय्यकामयदित्यादिः । स चैव मुत्तमप्रपाठके पठिष्यते—"यथाऽऽग्नेय्यकामयत् । विराट् सृष्टा प्रजापतेः । ऊर्ध्वाऽऽरोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः" इति । एतन्मन्त्रतात्पर्यस्य प्राजापत्योपाख्यानरूपार्थवादं पूर्वमनुक्त्वाऽधुनी साभागेयमित्यादिना तदीयतात्पर्यमुच्यते । येयं प्रजापतिसृष्टा विराट् सेयं तदानीमेषामग्नीनां भागरहिताऽभूत् । अन्वाहार्यं पचनस्याज्यमभिश्रयन्नीत्याद्युपयोगो यथाऽग्नीनामभिहितो न तथा विराजः कश्चिदुपयोग उक्तः । तस्मादभागत्वम् । सा च भागरहिता सती देशादूर्ध्वा भूत्वा दिवम् आरोहत् । आरुह्य च रोहिणीनक्षत्ररूपाऽभूत् । रोहतीति व्युत्पत्त्या रोहिणी नाम संपन्नम् । एवं च सति रोहिण्यामग्न्याधानेन स्वकारण एवाग्निः प्रतिष्ठित आहितो भवति । रोहिण्या विराड्रूपेणाग्निकारणत्वात् । तथा च सत्पुत्रपुत्र्यादिराट्समागमः संपद्यते । आधाता च समृद्धिं प्राप्नोति । अत एव पूर्वत्र—"यो रोहिण्यामग्निमाधत्ते । ऋध्नोत्येव" इति विहितम् । अत्र तु तद्विध्यनुवादेन विराण्मन्त्रः प्रशस्यते ॥

अस्य प्रपाठकस्य विनियोगसंग्रहः—

अनुवाका दश प्रोक्ताः प्रथमेऽस्मिन्प्रपाठके ॥
गुह्यमन्त्रिगता मन्त्रा आधाने कालनिर्णयः ॥ १ ॥
संभारविधिराधानं तत्प्रकारस्यार्थेष्टयः ॥
आधानमन्त्रव्याख्यानं सर्वोऽस्त्वेभिर्विभिन्नया ॥
पञ्चाभिर्वा इत्येवमनुवाका उदीरिताः ॥ २ ॥
वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ॥
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे प्रथमप्रपाठके दशमोऽनुवाकः ॥ १० ॥

---

१ आप. श्रौ. सू. ५. १८. २. । २ तै. ब्रा. १. २. १. । ३ तै. ब्रा. १. १. २. ।

अथ प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ।

[१२०] उद्धन्यमानमस्या अमेध्यम् । अप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः । शं नो माता पृथिवी तोकसाता । [१२१] शं नो देवीरभिष्टये । आपो भवन्तु पीतये । शं योरभिस्रवन्तु नः । वैश्वानरस्य रूपम् । पृथिव्यां परिस्रसा । स्योनमाविशन्तु नः (१) । [१२२] यदिदं दिवो यददः पृथिव्याः । संजज्ञाने रोदसी संबभूवतुः । ऊषान्कृष्णमवतु कृष्णमूषाः । इहोभयोर्यज्ञियमागमिष्ठाः । [१२४] ऊतीः कुर्वाणो यत्पृथिवीमचरः । गुहाकारमाखुरूपं प्रतीत्य ।

(१२०) यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् । निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥ आद्ये प्रपाठके प्रोक्तो विधिराधानगोऽखिलः । गवामयनशेषोऽयं द्वितीयेऽस्मिन्नुदीर्यते ॥ २ ॥ आधानानुवाके आधाने ये मन्त्रा नोदिता पुरा । ते सर्वेऽप्यभिधीयन्ते पूर्वशेषो भवेत्ततः ॥ ३ ॥ कल्पः—"उद्धन्यमानमस्या अमेध्यमप पाप्मानं यजमानस्य हन्तु । शिवा नः सन्तु प्रदिशश्चतस्रः शं नो माता पृथिवी तोकसाता, इति प्राचीनप्रवणं देवयजनमुद्धन्ति"[1] इति । (उद्धन्यमानमिति-) अस्याः पृथिव्याः संबन्धि यत्स्थानं निष्ठीवनादिभिरपहतत्वात् अमेध्यं यज्ञायोग्यं तदिदानीम् उद्धन्यमानं सद्यजमानस्य पाप्मानमपहन्तु । प्राच्यादिचतस्रः प्रकृष्टा दिशो नः अस्मान्प्रति शिवाः सुखप्रदाः सन्तु तोकसाता तोकसातयेऽपत्यलाभाय पृथिवी माता नः अस्माकं शं सुखं करोतु ॥

(१२१) कल्पः—"शं नो देवीरभिष्टय आपो भवन्तु पीतये, शं योरभिस्रवन्तु न, इत्यद्भिरवोक्ष्य"[2] इति । (शं न इति-) आपो देवीः इमा जलदेवता नः अस्माकम् अभिष्टये अभीष्टप्राप्त्यर्थं पीतये पानाय शं भवन्तु सुखप्रदा भवन्तु । किं च नः अस्माकं शं सुखं संपादयितुं योः दुःखं पृथक्कर्तुं च अभिस्रवन्तु सर्वतः प्रवर्तन्ताम् ॥

(१२२) कल्पः—"तेन पार्थिवान्संभारानाहरत्येतं वानस्पत्यानथ यद्वा भूयसो वा पार्थिवान्संभारानाहरेदिति वाजसनेयकम् । वैश्वानरस्य रूपं पृथिव्यां परिस्रसा, स्योनमाविशन्तु न, इति सिकता"[3] इति । (वैश्वानरस्येति-) विश्वेषां नराणां हितकारी वैश्वानरोऽग्निस्तस्याग्नेः स्वरूपं पृथिव्यां परिस्रसा परितः प्रसारयन्त्यः सिकताः स्योनं सुखं यथा भवति तथा नः अस्माकं देवयजनम् आविशन्तु ॥

(१२३) कल्पः—"यदिदं दिवो यददः पृथिव्याः संजज्ञाने रोदसी संबभूवतुरूषान्कृष्णमवतु कृष्णमूषा इहोभयोर्यज्ञियमागमिष्ठा इत्यूषान्"[4] इति । आहरतीत्येवं सर्वत्रानुवर्तते । (यदिदमिति-) दिवः संबन्धि यदिदम् ऊषरूपं पृथिव्यां स्थापितं पृथिव्याः संबन्धि यददः कृष्णरूपं चन्द्रमसि स्थापितं तत्र यद्द्वयं संजज्ञाने सम्यगवगच्छन्त्यौ रोदसी द्यावापृथिव्यौ संबभूवतुः परस्परयापते अभूताम् । तत्र यत् कृष्णरूपं द्यावापृथिव्योरूपमस्ति तदेतत् ऊषान् दिव स्वरूपभूतान् अवतु रक्षतु । ते च ऊषाः तत् कृष्णम् अवन्तु । उभयोः द्यावापृथिव्योः संबन्धि यज्ञियम् यज्ञयोग्यमंशद्वयम् इह देवयजनम् आगमिष्ठाः आगच्छतु ॥

(१२४) कल्पः—"ऊतीः कुर्वाणो यत्पृथिवीमचरो गुहाकारमाखुरूपं प्रतीत्य, तत्ते न्यक्तमिह संभरन्त"

१ आप. श्रौ. सू. ५. ४. १. । २ आप. श्रौ. सू. ५. ४. १. । ३ आप. श्रौ. सू. ५. १. ४-५-६-७. । ४ आप. श्रौ. सू. ५. १. ७. । ५ आप. श्रौ. सू. ५. १. ७. ।

तत्ते न्यक्तमिह संभरन्तः । शतं जीवेम शरदः सवीराः । ऊर्जं पृथिव्या रसमाभरन्तः । शतं जीवेम शरदः पुरूचीः (२) । वम्रीभिरनुवित्तं गुहासु । श्रोत्रं त उर्व्यबधिरा भवामः । प्रजापतिसृष्टानां प्रजानाम् । क्षुधोपहत्यै सुवितं नो अस्तु । उपप्रभिन्नमिषमूर्जं प्रजाभ्यः । सूदं गृहेभ्यो रसमाभरामि । यस्य रूपं बिभ्रदिमामविन्दत् । गुहा प्रविष्टां सरिरस्य मध्ये । तस्येदं विहतमाभरन्तः । अछंबट्कारमस्यां विधेम (३) । यत्पर्यपश्यत्सरिरस्य मध्ये ।

शता जीवेम शरदः सवीरा इत्याखुकरीषम्" इति । (ऊतीरिति-) हेऽग्ने तव आखुरूपं मूषकरूपं स्वीकृत्य गुहाकारं पर्वतगुहाया आकारो यथा भवति तथा ऊतीः बिलानि कुर्वाणः पृथिवीमचरः भूम्या चरितवानसीति यत्तत् न्यक्तं निगूढं ते त्वदीयं सारम् इह देवयजने संभरन्तः धारयन्तो वयं सवीराः पुत्रभृत्यसहिताः शरदः शतं शतसंख्यावान्संवत्सरान् जीवेम ॥

( १२५ ) कल्पः—"ऊर्जं पृथिव्या रसमाभरन्तः शतं जीवेम शरदः पुरूचीर्वम्रीभिरनुवित्तं गुहासु श्रोत्रं त उर्व्यबधिरा भवाम, इति वल्मीकवपाम्" इति । (ऊर्जमिति-) पृथिव्याः रसं सारम् ऊर्जं क्षीरादिवद्रसमाने वल्मीकवपारूपं संभरन्तः वयं शतं शरदो जीवेम । कीदृशीः शरदः[1] पुरूचीः पुरूणि बहूनि भोग्यान्यन्नानि संपादयन्तीति पुरूच्यस्तादृशीः । कीदृशं रसम्[1] गुहासु भूच्छिद्रेषु वम्रीभिः पिपीलिकासदृशीभिः अनुवित्तम् अनुक्रमेण लब्धम् । हे उर्वि ! तत् श्रोत्रं त्वदीयश्रोत्रस्थानीया वल्मीकवपामाहृत्य वयम् अबधिराः अनुपहतश्रोत्रेन्द्रिया भूयास्म ॥

( १२६ ) कल्पः—"प्रजापतिसृष्टानां प्रजानां क्षुधोपहत्यै सुवितं नो अस्तु, उपप्रभिन्नमिषमूर्जं प्रजाभ्यः सूदं गृहेभ्यो रसमाभरामि, इति सूदम्" इति । (प्रजापतिसृष्टानामिति-) याः प्रजापतिसृष्टाः प्रजास्तासां [क्षुधोपहत्यै] क्षुन्निवारणाय नः अस्मत्संबन्धीदं सूदरूपं सुवितं सुष्ठु प्राप्तम् अस्तु । येयमिडन्नं या चोर्मेस, उभयं प्रजाभ्यः प्रजार्थम् उपप्रभिन्नम् अत्यन्तसामीप्यं यथा भवति तथैकीभूतं तादृशं [सूदं] रसम् मूलरसं पङ्करूपं गृहेभ्यः यज्ञीनामायतनार्थम् [आभरामि] आहरामीहाऽऽनयामि ॥

( १२७ ) कल्पः—"यस्य रूपं बिभ्रदिमामविन्दद्गुहा प्रविष्टां सरिरस्य मध्ये, तस्येदं विहतमाभरन्तोऽछंबट्कारमस्यां विधेम, इति वराहविहतम्" इति । (यस्येति-) पुरा प्रजापतिः यस्य वराहस्य रूपं बिभ्रत् धारयमाणः इमां पृथिवीम् अविन्दत् अलभत । कीदृशीम्[1] सरिरस्य मध्ये प्रलयकालीनजलस्यान्तः गुहा गोप्यं स्थानं पातालरूपं प्रविष्टाम् । अयमर्थस्तैत्तिरीयब्राह्मणे स्पष्टमाम्नातः—"आपो वा इदमग्रे सलिलमासीत्तस्मिन्प्रजापतिर्वायुर्भूत्वाऽचरत्स इमामपश्यत्तां वराहो भूत्वाऽऽहरत्" इति । तस्य वराहस्य विहतं पोत्रोत्खातम् इदं मृद्द्रव्यम् आभरन्तः आनयन्तो वयम् अस्यां पृथिव्याम् अछंबट्कारं वैयर्थ्यं यथा न भवति तथा विधेम कर्माण्यनुतिष्ठेम ॥

( १२८ ) कल्पः—"यत्पर्यपश्यत्सरिरस्य मध्ये उर्वीमपश्यज्जगतः प्रतिष्ठाम्, तत्पुष्करस्याऽऽयतनाद्धि जातं पर्णं पृथिव्याः प्रथनं हरामीति पर्णम्" [इति] । (यदिति-) जगतः स्थावरजङ्गमरूपस्य प्रतिष्ठाम् आधारभूताम् उर्वीं लब्धुकामः प्रजापतिः सरिरस्य मध्ये प्रलयकालीनजलस्यान्तः यत् पुष्करपर्णम् अपश्यत् । तथा च पूर्वमाम्नातम्—"सोऽपश्यत्पुष्करपर्णं तिष्ठत्" इति । तत्पुष्करस्य पर्णं हरामि देवयजनभूमौ नयामि । कीदृशम्[?] आयतनाद्धि जलमध्ये निमग्नादाधारात् [जातम्] उत्पन्नम् । हिशब्दो ब्राह्मणप्रसिद्धिं सूचयति । तथा ब्राह्मणे पूर्वमेवोक्तम्—"सोऽमन्यत । अस्ति वै तत् । यस्मिन्निदमधितिष्ठति"

१ आप श्रौ. सू. ५ १ ७ । २ आप. श्रौ सू ५ १. ७. । ३ आप श्रौ. सू ५ १. ७ ।
४ आप श्रौ. सू ५. २. ४. । ५ तै ब्रा १ १ ३. ।

उर्वीमपश्यञ्जगतः प्रतिष्ठाम् । तत्पुष्करस्याऽऽयतनाद्धि जातम् । पर्णं पृथिव्याः प्रथनꣳ हरामि । याभिरदृꣳहञ्जगतः प्रतिष्ठाम् । उर्वीमिमां विश्वजनस्य भर्त्रीम् । ता नः शिवाः शर्कराः सन्तु सर्वाः । अग्नेरेतश्चन्द्रꣳ हिरण्यम् । अद्भ्यः संभूतममृतं प्रजासु । तत्संभरन्नुत्तरतो निधाय (४) । अतिप्रयच्छं दुरितिं तरेयम् । अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः । संवत्सरं देवेभ्यो निलाय । तत्ते न्यक्तमिह संभरन्तः । शतं जीवेम शरदः सवीराः । ऊर्जः पृथिव्या अध्युत्थितोऽसि । वनस्पते शतवल्शो विरोह । त्वया वयमिषमूर्जं मदन्तः । रायस्पोषेण समिषा मदेम । गायत्रिया ह्रियमाणस्य यत्ते (५) । पर्णमपतत्तृतीयस्यै दिवोऽधि । सोऽयं पर्णः सोमपर्णाद्धि जातः । ततो हरामि

इति । तारकाधारादिविस्तृतत्वम् । तथा पृथिव्याः [प्रथनम्] प्रथमभूमेर्विस्तारस्थानम् । एतदपि पूर्वेनाऽऽम्नातम्—"तत्पुष्करपर्णं प्रथयत्" इति ॥

(१२९) कल्प —"याभिरदृꣳहज्जगतः प्रतिष्ठामुर्वीमिमां विश्वजनस्य भर्त्रीम्, ता न शिवा शर्करा सन्तु सर्वा इति शर्करा" इति । (याभिरिति-) जगतः स्थावरादेः प्रतिष्ठाम् आश्रयभूतां विश्वजनस्य भर्त्रीं सस्यादिद्वारा सर्वजनस्य पोषयित्रीम् इमामुर्वीं याभिः शर्कराभिः अदृꣳहत् दृढीकृतवान् प्रजापतिः । एतदपि पूर्वमुक्तम्—"ताꣳ शर्कराभिरदृꣳहत्" इति । ताः तादृश्यः शर्कराः क्षुद्रपाषाणाः नः अस्मदर्थं [शिवाः] सुखप्रदाः सन्तु ॥

(१३०) कल्प —"अग्नेरेतश्चन्द्रꣳहिरण्यमद्भ्य संभूतममृतं प्रजासु, तत्संभरन्नुत्तरतो निधायातिप्रयच्छन्दुरितिं तरेयमिति हिरण्यम्" इति । (अग्नेरिति-) तत् हिरण्यं तत्संभरन् संपादयन् अहं भीमत्वनिवारणाय [उत्तरतः] उत्तरपार्श्वे तद्धिरण्यं निधाय द्वेष्याय रजतम् अतिप्रयच्छन् अहं दुरितिं दुर्गतिं तरेयम् ॥

(१३१) कल्प —"अश्वो रूपं कृत्वा यदश्वत्थेऽतिष्ठः संवत्सरं देवेभ्यो निलाय तत्ते न्यक्तमिह संभरन्तः, शतं जीवेम शरदः सवीरा इत्यश्वत्थम्" इति । (अश्व इति-) हेऽग्ने । त्वं यत् यदा अश्वः सन् स्वकीयं रूपं च सम्यक् कृत्वा देवेभ्यो निलाय गूढोऽवस्थाय संवत्सरं निरन्तरम् अश्वत्थे [अतिष्ठः] स्थितवानसि । तत् तदा ते त्वदीयं न्यक्तम् अश्वत्थे निगूढं तेजः सारम् इह संभूमौ संभरन्तः संपादयन्तो वयं सवीराः पुत्रपौत्रसहिताः शतं शरदो जीवेम ॥

(१३२) कल्प —"ऊर्जः पृथिव्या अध्युत्थितोऽसि वनस्पते शतवल्शो विरोह त्वया वयमिषमूर्जं मदन्तो रायस्पोषेण समिषा मदेमेत्युदुम्बरम्" इति । (ऊर्जमिति-) हे वनस्पते ! उदुम्बरवृक्ष ! ऊर्जः रसविशेषस्य सिद्धये पृथिव्याः अध्युत्थितोऽसि भूमेरुपरि प्ररूढोऽसि । अतोऽस्माभिश्छिन्नोऽपि पुनः शतवल्शः शतशाखायुक्तो विरोह विशेषेण प्रादुर्भव । त्वया उपकृता वयमिषम् अन्नम् ऊर्जं रसं च मदन्तः हर्षपुरःसरं प्राप्नुवन्तो रायस्पोषेण धनपुष्ट्या समीचीनेनान्नेन युक्ता मदेम पुनरपि हृष्यास्म ॥

(१३३) कल्प —"गायत्रिया ह्रियमाणस्य यत्ते पर्णमपतत्तृतीयस्यै दिवोऽधि, सोऽयं पर्णः सोमपर्णाद्धि जातस्ततो हरामि सोमपीथस्यावरुद्ध्यै, देवानां ब्रह्मवादं वदतां यदुपाशृणोः सुश्रवा वै श्रुतोऽसि, ततो मामाविशतु ब्रह्मवर्चसं तत्संभरꣳस्तदवरुन्धीय साक्षादिति पर्णम्" इति । (गायत्रियेति-) हे सोम ! तृतीयस्यै दिवोऽधि इम लोकमारभ्य गणनायां तृतीयस्य द्युलोकस्योपरि गायत्रिया ह्रियमाणस्य गायत्रीदेवतया

सोमपीथस्यावरुद्ध्यै । देवानां ब्रह्मवादं वदतां यत् । उपाश्रृणोः सुश्रवा वै श्रुतोऽसि । ततो मामाविशतु ब्रह्मवर्चसम् । तत्संभरंस्तदवरुन्धीय साक्षात् । [134]यया ते सृष्टस्याग्नेः । हेतिमशमयत्प्रजापतिः । तामिमामप्रदाहाय (६) । शमीꣳ शान्त्यै हराम्यहम् । [135]यत्ते सृष्टस्य यतः । विकङ्कतं भा आर्च्छज्जातवेदः । तया भासा संमितः । उरुं नो लोकमनुप्रभाहि । [136]यत्ते तान्तस्य हृदयमाच्छिन्दञ्जातवेदः । मरुतोऽद्भिस्तमयित्वा । एतत्ते तदशनेः संभरामि । सात्मा अग्ने सहृदयो भवेह । [137]चित्रियादश्वत्थात्संभृता बृहत्यः (७) । शरीरमभिसꣳस्कृताः स्थ । प्रजापतिना यज्ञमुखेन संमिताः । तिस्रस्त्रिवृद्भिर्मिथुनाः

पलाशादिममागत्य ते तव यत्पर्णं भूमौ अपतत् सोऽयं पर्णः पलाशवृक्षः स च सोमपर्णाज्जात इति पर्णनामधेयेनैव प्रसिद्धः । ततः तस्मात्कारणात् सोमपीथस्यावरुद्ध्यै सोमपानस्य सिद्धये हरामि स्थामि-हाऽऽनयामि । किं च पलाशवृक्षच्छायायामुपविश्य ब्रह्मवादं वदताम् आत्मविषयं संवादं कुर्वतां देवानां संबन्धं ब्रह्मवादं यत् यस्मात्कारणात् त्वम् उपाश्रृणोः समीपे स्थित्वा श्रुतवानसि । अत एव सुश्रवा इति नाम्नैव त्वं श्रुतोऽसि प्रसिद्धोऽसि, ततस्तस्मात्कारणात्त्वदानयने प्रवृत्तं मां ब्रह्मवर्चसमाविशतु । तत् तादृशं पर्णरूपं संभरन् अहं ब्रह्मवर्चसं साक्षात् अवरुन्धीय विलम्बमन्तरेण प्राप्नुयाम् ॥

(१३४) कल्पः—"यया ते सृष्टस्याग्नेर्हेतिमशमयत्प्रजापतिस्तामिमामप्रदाहाय शमीꣳ शान्त्यै हराम्य-हमिति शमीम्" इति । (ययेति-) हे शमीवृक्ष ! ते त्वदीयया यया शाखया प्रजापतिः सृष्टस्याग्ने-र्हेतिं प्रदाहरूपमायुधम् अशमयत् तामिमां शमीं पूर्वस्य दाहस्य शान्त्यै इत ऊर्ध्वम् अप्रदाहाय च हरामि यज्ञभूमावानयामि ॥

(१३५) कल्पः—"यत्ते सृष्टस्य यतो विकङ्कतं भा आर्च्छज्जातवेदस्तया भासा संमित उरुं नो लोक-मनुप्रभाहीति विकङ्कतम्" इति । (यत्त इति-) हे जातवेदः ! प्रजापतिना सृष्टस्य यतः शीघ्रं गच्छतः ते तव भा या दीप्तिः विकङ्कतं वृक्षम्—आर्च्छत् प्राप्नोत् । तया भासा [संमितः] संयुक्तः सन् अस्म-दर्थम् उरुं विस्तीर्णं लोकं स्थानम्—अनुप्रभाहि अनुक्रमेण प्रकाशय ॥

(१३६) कल्पः—"यत्ते तान्तस्य हृदयमाच्छिन्दञ्जातवेदो मरुतोऽद्भिस्तमयित्वैतत्ते तदशनेः संभरामि सात्मा अग्ने सहृदयो भवेहेत्यशनिहतस्य वृक्षस्य शकलानि त्वचो वा" इति । (यत्त इति-) हे जातवेदः ! पुरा कदाचित् मरुतः देवा विद्वेषात् अद्भिः त्वदीयां तां ज्वालां तमयित्वा शमयित्वा ग्लानिं प्रापय्य तान्तस्य ग्लानिं प्राप्तस्य ते तव यद्धृदयमाच्छिन्दन् तत् एतत् ते हृदयम् अशनेः सकाशादहं संभ-रामि छिन्नस्य हृदयस्याशनौ प्रविष्टत्वात् । ततः संभरणं युक्तम् । "सोऽशनिरभवद्" इति ब्राह्मणं पुरोदाहृ-तम् । तस्य हृदयस्य मया संभृतत्वात् इह देवयजने हे अग्ने ! त्वं सात्मा सत्स्वरूपः सहृदयः हृदययुक्तश्च भव । एतेषूक्तेषु सर्वेष्वपि मन्त्रेषूदैन्तीत्याद्यनुवाकोक्तं तत्तद्ब्राह्मणमनुसंधेयम् ॥

(१३७) कल्पः—"अथ ब्रह्मौदनशेषꣳसꣳस्कृत्य तस्मिन्नाज्यशेषमानीय तस्मिन्नश्वत्थमयीस्तिस्रः समिध आर्द्राः सपलाशाः प्रादेशमात्र्यस्तिसृभिरभ्यादधाति—चित्रियादश्वत्थात्संभृता बृहत्यः शरीरम-भिसꣳस्कृताः स्थ, प्रजापतिना यज्ञमुखेन संमितास्तिस्रस्त्रिवृद्भिर्मिथुनाः प्रजात्यै" इति । (चित्रियादिति-) ग्रामतटाकादिचिह्नभूतः प्रसिद्धोऽश्वत्थश्चित्रियः । हे समिधो ! यूयं चित्रियादश्वत्थात्संभृता मया संपादिताः ।

१ आप. श्रौ. सू. ५. २. ४. । २ आप. श्रौ. सू. ५. २. ४. । ३ आप. श्रौ. सू. ५. १. ४. । ४ तै. ब्रा. १. १. ३. । ५ "घ्नन्तीति तृतीयापत्तु" इति पा० । ६ आप. श्रौ. सू. ५. ५. १०. ।

प्रजात्यै । [१३८]अश्वत्थाद्धव्यवाहाद्धि जाताम् । अग्नेस्तनूं यज्ञियाꣳ संभरामि । शान्तयोनिꣳ शमीगर्भम् । अग्नये प्रजनयितवे । [१३९]यो अश्वत्थः शमीगर्भः । आरुरोह त्वे स चा । तं ते हरामि ब्रह्मणा ( ८ ) । यज्ञियैः केतुभिः सह । [१४०]यं त्वा समभरञ्जातवेदः । यथाशरीरं भूतेषु न्यक्तम् । स संभृतः सीद शिवः प्रजाभ्यः । उरुं नो लोकमनुनेषि विद्वान् । [१४१]प्र वेधसे कवये मेध्याय । वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्तु । अव देवान्यजे

---

अत एव यूयमस्यः महस्यः पूज्यास्तथा शरीरमभिसंस्कृताः स्थ । चरुगते महत्साज्ये निवर्तनेन कृत्स्नं स्वशरीरमभिव्याप्य संस्कारयुक्ता भवथ । किं च प्रजापतिरूपेण यज्ञपुरुषमुखेन प्रादेशमानेन संमिताः तुल्यास्तादृश्यः तिस्रः समिधः त्रिवृद्भिः भविष्यदाहवनीयादिरूपेण त्रिगुणैरग्निभिः सह प्रजात्यै मिथुनाः प्रजोत्पादनार्थं मिथुनीभूताः ॥

( १३८ ) कल्पः—"अश्वत्थाद्धव्यवाहाद्धि जातामग्नेस्तनूं यज्ञियाꣳसंभरामि शान्तयोनिꣳशमीगर्भमग्नये प्रजनयितव इत्यायुर्मयि धेह्यायुर्यजमान इत्यरणी अभिमन्त्र्य" इति । आयुरित्यादिकः सौत्रो मन्त्रः । (अश्वत्थादिति–) [हव्यवाहात्] हव्यं वहतीति हव्यवाहोऽग्निस्तद्रूपोऽयमश्वत्थोऽश्वरूपं धृत्वाऽग्नेस्तस्मिन्वृक्षे प्रविश्य संवत्सरमवस्थितत्वात्तस्मात् अश्वत्थाज्जाताम् उत्पन्नामरणिं संभरामि संपादयामि । कीदृशीम् ? अग्नेर्यज्ञियां तनूं लौकिकदाहपाकादिहेतुर्यज्ञिया तनुः । अरणिरूपा तु या यज्ञार्हा शान्तयोनिं दाहप्रकाशाद्यनभिव्यक्त्या शान्तामग्न्युत्पादकत्वेन योनिश्च शमीगर्भं शमिवृक्षवेष्टिताश्वत्थवृक्षजन्यत्वेन शमीगर्भमीदृशीमरणिम् अग्नये प्रजनयितवे अग्न्युत्पादनार्थं संभरामीति पूर्वत्रान्वयः ॥

( १३९ ) कल्पः—"यो अश्वत्थः शमीगर्भ आरुरोह त्वे स चा, तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सहेति शमीगर्भस्याश्वत्थस्यारणी आहरति" इति । अर्थक्रमादयं मन्त्रः पूर्वभावी द्रष्टव्यः । न ह्याहरणमन्तरेणाभिमन्त्रयितुं शक्यते । (य इति–) हेऽरणे । त्वे त्वयि निमित्तभूतायां सत्यां शमीगर्भो योऽश्वत्थः स च तया शम्या समवेत आरुरोह, ईमामारुह्य प्ररूढः तं तादृशमश्वत्थं ते त्वदर्थं ब्रह्मणा मन्त्रेण यज्ञियैः केतुभिः यज्ञार्हैर्लाञ्छनैरभिमन्त्रणादिबन्धमापरसंस्कारैश्च सह हरामि यज्ञभूमावानयामि ॥

( १४० ) कल्पः—"यं त्वा समभरं जातवेदो यथाशरीरं भूतेषु न्यक्तं स संभृतः सीद शिवः प्रजाभ्य उरुं नो लोकमनुनेषि विद्वानिति संभृत्य निदधाति" इति । (यमिति–) हे जातवेदः । यं त्वा त्वामृत्विजः समभरन् संभरणयुक्तं कृतवन्तः । कीदृशं त्वां भूतेषु प्राणिषु यथाशरीरं तत्तच्छरीरमनतिक्रम्य न्यक्तम् औदर्याग्निरूपेण निगूढं स तादृशस्त्वं संभृतः संभारैर्युक्तः प्रजाभ्यः शिवः प्रजानां सुखप्रदो भूत्वा सीद इह देवयजनस्थानमुपविश । विद्वान् सर्वलोकाभिज्ञस्त्वं नः अस्मदर्थम् उरुं विस्तीर्णं लोकम् अनुनेषि अनुक्रमेण संपादय ॥

( १४१ ) कल्पः—"दर्व्यां ब्रह्मौदनादुद्धृत्य—प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे, यतो भयमभयं तन्नो अस्त्वव देवान्यजे हेड्यानिति जुहोति" इति । (प्रेति–) वेधसे कर्मद्वारा जगतो धात्रे कवये विदुषे सर्वज्ञाय मेध्याय यज्ञयोग्याय वृषभाय देवश्रेष्ठाय वृष्णे कामानां वर्षयित्रे वह्नये वन्दारु वचो नमस्कारशीलं वाक्यमस्माभिः प्रोऽऽरब्धम् । प्राणिनां तस्य यतः यस्मात्कारणात् भयं तत् तस्मात् नः अस्माकम् अभयमस्तु । हेड्यान् क्रोधयोग्यानस्मद्विरोधिनो देवान् अवयजे विनाशयामि ॥

---

१ आप. श्रौ. सू. ५. १. ४. । २ आप. श्रौ. सू. ५. १. २. । ३ °द्ध समादध प्र° इति पा० । ४ आप. श्रौ. सू. ५. २. १. । ५ °संभारयु° इति पा० । ६ आप. श्रौ. सू. ५. ५. ८. ।

हेड्यान् । [142]स॒मिधा॒ऽग्निं दु॑वस्यत (९) । घृ॒तैर्बो॑धयु॒ताति॑थिम् । आऽस्मि॑न्ह॒व्या जु॑होतन । [143]उप॑ त्वाऽग्ने ह॒विष्म॑तीः । घृ॒ताची॑र्यन्तु हर्यत । जु॒षस्व॑ स॒मिधो॒ मम॑ । [144]तं त्वा॑ स॒मिद्भि॑रङ्गिरः । घृ॒तेन॑ वर्धयामसि । बृ॒हच्छो॑चा यविष्ठ्य । [145]स॒मि॒ध्यमा॑नः प्रथ॒मो नु धर्मः॑ । सम॒क्तुभि॑रज्यते वि॒श्ववा॑रः (१०) । शो॒चिष्के॑शो घृ॒तनि॑र्णि॒क्पाव॒कः । सुय॒ज्ञो अ॒ग्निर्य॒जथा॑य दे॒वान् । [146]घृ॒तप्र॑तीको घृ॒तयो॑निर॒ग्निः । घृ॒तैः समि॑द्धो घृ॒तम॒स्यान्न॑म् । घृ॒त॒प्रुष॑स्त्वा स॒रितो॑ वहन्ति । घृ॒तं पिब॑न्त्सु॒यजा॑ यक्षि दे॒वान् । [147]आ॒यु॒र्दा अ॑ग्ने ह॒विषो॑ जुषा॒णः । घृ॒तप्र॑तीको घृ॒तयो॑निरेधि । घृ॒तं पी॒त्वा मधु॒ चारु॒गव्य॑म् । पि॒तेव॑ पु॒त्रम॒भिर॑-

---

( १४२ ) यदुक्तं समिदाधानप्रतिपादके ब्राह्मणे—"गायत्रीभिर्ब्राह्मणस्याऽऽदध्यात्" इति, तत्र प्रथममाह—(समिधाग्निमिति-) हे ऋत्विजोऽनया प्रक्षिप्यमाणया **समिधा अग्निं दुवस्यत** प्रीणयत । **अतिथिं** वैश्वदेवान्ते समागतं ब्राह्मणमिव पूजनीयमेनमग्निं **घृतैर्बोधयत** दीपयत । **अस्मिन्** अग्नौ **हव्या** हवींषि **आजुहोतन** सर्वत्र जुहुत ॥

( १४३ ) अथ द्वितीयमाह—(उपेति-) **हे हर्यत!** भजनीय **अग्ने! हविष्मतीः** प्रक्षेप्तव्यहविष्मत्यो **घृताचीः** घृताच्यो घृतसंपृक्ता एताः **समिधः** त्वामुपयन्तु **मम समिधो जुषस्व** प्रीत्या सेवस्व ॥

( १४४ ) अथ तृतीयमाह—(तमिति-) **हे अङ्गिर !** अङ्गारोपेतमुख अग्ने! तं तादृशं सर्वकर्मसु प्रसिद्ध [त्वा] त्वा **समिद्भिर्घृतेन** च **वर्धयामसि** वयं वर्धयाम । **हे यविष्ठ्य!** युवतमाग्ने! **बृहच्छोचा** महत्त्वं यथा भवति तथा दीप्यस्व ॥

( १४५ ) यदुक्तं ब्राह्मणे—"त्रिष्टुब्भी राजन्यस्य" इति, तत्र प्रथममाह—(समिध्यमान इति-) अयम् **अग्निः देवान्यजथाय** यष्टुम् **अक्तुभिर्घृता**क्ताभिः समिद्भिः **समज्यते** सम्यगज्यते दीप्यते । कीदृशोऽग्निः ? सर्वयजमाने सर्वत्र **समिध्यमानः प्रथमोऽनु** सर्वासां देवतानां मध्येऽयम् प्रथममावी । अत एवाम्नाताम्—"अग्निरग्रे प्रथमो देवतानाम्" इति । **धर्मः** विश्वस्य धारयिता । **विश्ववारः** अनिष्टं सर्वं निवारयितुं समर्थः । शोचींषि ज्वालाः केशस्थानीया यस्यासौ **शोचिष्केशः** । घृतेन निर्णिज्यते नितरां शोध्यते धूमरहितज्वालायुक्तः क्रियत इति **घृतनिर्णिक्** । **पावकः** सर्वस्य शोधकः । **सुयज्ञः** शोभनज्योतिष्टोमादियज्ञहेतुः ॥

( १४६ ) अथ द्वितीयमाह—(घृतप्रतीक इति-) अयमग्निः **घृतप्रतीकः**, प्रतीकशब्दो मुखवाची "मुखं प्रतीकं" इति वाजसनेयश्रुतेः । घृतं प्रतीकं मुखं यस्यासौ घृतप्रतीकः । तत्तदाहुतिषु घृतं पिबतीत्यर्थः । घृतमेव योनिर्ज्वालोत्पत्तिकारणं यस्येति **घृतयोनिः** । अत एव **घृतैः समिद्धः** सम्यक्प्रज्वलितः । **अन्नम् अपि अस्य घृतम्** एव । हेऽग्ने! **घृतप्रुषः** घृतबिन्दुयुक्ताः **सरितः** [त्वा] त्वा **वहन्ति** । घृतवाहिनीषु नदीषु वायुना घृतबिन्दवस्तीरे प्रसरन्ति तादृशीषु नदीषु प्लवमानस्त्वं क्रीडसीत्यर्थः । तथाविधस्त्वमसहृत्त **घृतं पिबन् सुयजाः** शोभनेन यज्ञेन **देवान्यक्षि** पूजय ॥

( १४७ ) अथ तृतीयमाह—(आयुरिति-) **हे अग्ने! हविषो जुषाणः** हवींषि सेवमानो **घृतप्रतीकः घृतयोनिः** सन् **आयुर्दाः एधि**, अस्माकमायुष्प्रदो भव । तथा **मधु** मधुरं **चारुगव्यं** रमणीयं गोसम्बन्धिरस घृतं **पीत्वा** इमं यजमानमभितस्सर्वतो रक्ष । यथा **पिता पुत्रं रक्षति** तद्वत् ॥

---

१ तै. आ ९. ३. ५. । २ तै. आ. ९. ३. ३. । ३ °म्यगभिव्यज्यते इति पा० । ४ तै. मा. २. ४. २. ।

क्षतादिमम् ( ११ ) त्वामग्ने समिधानं यविष्ठ । देवा दूतं चक्रिरे हव्यवाहम् । उरुज्रयसं घृतयोनिमाहुतम् । त्वेषं चक्षुर्दधिरे चोदयन्वति । त्वामग्ने प्रदिव आहुतं घृतेन । सुम्नायवः सुषमिधा समीधिरे । स वावृधान ओषधीभिरुक्षितः । उरु ज्रयांसि पार्थिवा वितिष्ठसे । घृतप्रतीकं व ऋतस्य धूर्षदम् । अग्निं मित्रं न समिधान ऋञ्जते ( १२ ) । इन्धानो अक्रो विदथेषु दीद्यत् । शुक्रवर्णामुदु नो यंसते धियम् । प्रजा अग्ने संवासय । आशाश्च पशुभिः सह । राष्ट्राण्यस्मा आधेहि । यान्यासन्सवितुः सवे । मही विश्पत्नी सदने ऋतस्य । अर्वाची एतं धरुणे रयीणाम् । अन्तर्वत्नी जन्यं जातवेदसम् । अध्व-

( १४८ ) यदुक्तं ब्राह्मणे—"अंगतोभिर्वैस्यस्य" इति, तत्र प्रथममाह—(त्वामग्न इति-) हे यविष्ठ ! युवतमाग्ने ! समिध्यमानं सम्यक्प्रकाशमानं त्वां देवाः सर्वे हव्यवाहं हविषां वोढारं दूतं चक्रिरे । अत एवान्यत्राऽऽम्नातम्—"अग्निर्देवानां दूत आसीत्" इति । उरुज्रयसम् उरूणि ज्रयांसि वैरिणामभिभवनानि यस्मात्तादुरुज्रयसस्तादृशं घृतयोनिं घृतेनोत्पन्नज्वालम् आहुतम् आहुतिभिराराधितं त्वेषं दीप्यमानं त्वा चोदयन्वति विधायकवाक्ययुक्ते कर्मणि चक्षुर्दधिरे चक्षुःस्थानीयं कृतवन्तो देवाः । यथा लोके चक्षुषा रूपं स्पष्टं प्रकाश्यते तथा त्वया विधिवाक्योक्तानि कर्माणि संपाद्यन्त इत्यर्थः ॥

( १४९ ) अथ द्वितीयमाह— (त्वामग्न इति-) सुम्नं सुखमात्मन इच्छन्तीति सुम्नायवः ऋत्विजस्ते प्रदिवे प्रकृष्टस्वर्गार्थं यद्वा प्रदिवः प्रकृष्टस्वर्गनिमित्तभूतात् । हे अग्ने ! त्वा घृतेन आहुतं सर्वदा आराधितं सुषमिधा शोभनया समिधा समीधिरे सम्यगुद्दीपितवन्तः । स त्वमोषधीभिः ओषध्युपलक्षितानि वावृधानः अत्यन्तं वर्धमान उक्षितो घृतेन सिक्तः । पार्थिवाः पार्थिवानि ज्रयांसि बाधकानि उरु वितिष्ठसे अत्यन्तविक्षिप्तानि स्थापय ॥

( १५० ) अथ तृतीयमाह—(घृतप्रतीकमिति-) हे ऋत्विग्यजमानाः ! युष्मत्संबन्धिनः ऋतस्य यज्ञस्य धूर्षदं धुरि सीदन्तं निर्वाहकमित्यर्थः । तादृशं घृतप्रतीकमग्निं समिधानो दीपयन्यजमानः मित्रं न मित्रमिव ऋञ्जते अलं करोति । इन्धानः स्वयं दीप्यमानः अक्रः केनापि नाऽऽक्रान्तोऽयमग्निः विदथेषु दीद्यत् अस्माकं यज्ञेषु दीप्यमानः नः अस्मदीयां शुक्रवर्णां निर्मलरूपां धियं प्रज्ञाम् उदु यंसते अत्यन्तमुद्यच्छते उद्गमयतीत्यर्थः ॥

( १५१ ) कल्पः—"प्रजा अग्ने संवासयाऽऽशाश्च पशुभिः सह, राष्ट्राण्यस्मा आधेहि यान्यासन्सवितुः सव इत्युत्तरेण गार्हपत्यायतनं कल्माषमजं बध्नाति" इति । तत्राग्निशब्देनाजः संबोध्यते तस्याग्निसंबन्धित्वात् । "आग्नेयो वा एष यदजः" इति श्रुत्यन्तरादग्निना सह प्रजापतिमुखादुत्पन्नत्वाच्च । (प्रजा इति-) हे अग्ने ! अजात्मन् प्रजा अस्मदीयाः पशुभिः सहाऽऽशा दिग्वर्तिनः प्राणिनश्च संवासय संवासनेन पालय । यानि राष्ट्राणि सवितुः सवे परमेश्वरस्याऽऽज्ञया पूर्वमासन्तानि राष्ट्राणि अस्मै यजमानाय आधेहि सर्वतः संपादय ॥

( १५२ ) कल्पः—"मही विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणामन्तर्वत्नी जन्यं जातवेदसमध्वराणां जनयथ पुरोगामित्यरणी आह्रियमाणे यजमानः प्रतीक्षते" इति—(महीति-) रयीणां धनानां धरुणे धारयित्र्यौ हेऽरणी ! मही महत्यौ पूजनीये विश्पत्नी प्रजानां पालयित्र्यौ अर्वाची अभिमुखे सत्यौ

१ तै. १. १. ५. । २ तै. सं. २. ५. ११. । ३ आप. श्रौ. सू. ५. ७. १४. । ४ तै. ब्रा. १. ७. ३. । ५ आप. श्रौ. सू. ५. ८. ६. ।

राणां जनयथः पुरोगाम् (१३)। [१]आरोहतं दशतꣳ शक्करीर्मम । ऋतेनाग्न आयुषा वर्चसा सह । ज्योग्जीवन्त उत्तरामुत्तराꣳ समाम् । दर्शमहं पूर्णमासं यज्ञं यथा यजै । [२]ऋत्वियवती स्थो अग्निरेतसौ । गर्भं दधाथां ते वामहं ददे । तत्सत्यं यद्वीरं बिभृथः । वीरं जनयिष्यथः । ते मत्प्रातः प्रजनिष्येथे । ते मा प्रजाते प्रजनयिष्यथः (१४) । प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोके । [३]अनृतात्सत्यमुपैमि । मानुषाद्दैव्यमुपैमि । दैवीं वाचं यच्छामि । [४]शल्कैरग्निमिन्धानः । उभौ लोकौ सनेमहम् । उभयोर्लोकयोर्ऋद्ध्वा । अति मृत्युं

---

ऋतस्य सदने यज्ञस्य स्थाने एतम् आगच्छतम् । अन्तर्वत्नी गर्भिण्यौ युवां अन्यं जनयितारमग्निं जातवेदसं जातानां वेदितारम् अध्वराणां पुरोगां यज्ञानामग्रगामिणं जनयथः उत्पादयतम् ॥

(१५३) कल्पः—"आरोहतं दशतꣳशक्करीर्मम ऋतेनाग्न आयुषा वर्चसा सह ज्योग्जीवन्त उत्तरामुत्तराꣳसमां दर्शमहं पूर्णमासं यज्ञं यथा यजा इति हस्ताभ्यां प्रतिगृह्य" इति । (आरोहतमिति–) हेऽरणी ! मम मदीयाः शक्करीः शक्तियुक्ता अङ्गुल्यो याः सन्ति तासां दशतं दशसंख्यायुक्तवर्गम् आरोहतम् हे अग्ने ! अरणिगर्भस्थ ! त्वमपि ऋतेन यज्ञेन आयुषा अस्मदीयेन दीर्घायुष्येण वर्चसा तेजसा सह दशतमारोह । वयं ज्योक् दीर्घकालं जीवन्त उत्तरामुत्तरां समाम् उत्तरोत्तरसंवत्सरे विच्छेदमन्तरेण दर्शं पूर्णमासं च यज्ञं यथा यजै यथा यजाम तथा त्वमारोहेति पूर्वेणान्वयः ॥

(१५४) कल्पः—"ऋत्वियवतीस्थो अग्निरेतसौ, गर्भं दधाथां ते वामहं ददे, तत्सत्यं यद्वीरं बिभृथो वीरं जनयिष्यथस्ते मत्प्रातः प्रजनिष्येथे ते मा प्रजाते प्रजनयिष्यथः प्रजया पशुभिर्ब्रह्मवर्चसेन सुवर्गे लोक इति प्रतिगृह्याभिमन्त्रयते यजमानः" इति । (ऋत्वियवतीति–) हेऽरणी ! युवाम् ऋत्वियवती ऋतुः प्राप्तोऽस्येत्यृत्वियो योनिः स ययोररण्योस्ते ऋत्वियवती प्रजननाभिमुखगर्भवत्यौ । अग्निरेव रेतोरूपेण गर्भो ययोस्ते अग्निरेतसौ तादृश्यौ स्थः भवथः । तादृश्यौ युवां गर्भं दधाथां गर्भं पोषयतम् । ते तादृश्यौ वां युवाम् अहं ददे आदत्तवानस्मि । ते युवां वीरं वर्मेषु शूरं पुत्रं बिभृथः धारयथः । अतो वीरम् एव जनयिष्यथः इति यत् तत्सत्यं न तु मिथ्या । ते युवां मत् मत्तो निमित्तभूतात् प्रातः प्रजनिष्येथे परेद्युः प्रातःकाले स्वकीया वह्निमुत्पादयिष्यथः प्रजाते वह्निमुत्पादितवत्यौ ते युवामपि प्रजनयिष्यथः प्रजनयितारं करिष्यथः । अतः स्वर्गे लोके प्रजया पशुभिर्ब्रह्मवर्चसेन च युक्तो भविष्यामीति शेषः ॥

(१५५) कल्पः—"अथ यजमानो व्रतमुपैति वाचं यच्छति—अनृतात्सत्यमुपैमि मानुषाद्दैव्यमुपैमि दैवीं वाचं यच्छामि" इति । (अनृतादिति–) अनृतात् अभिप्रायहितलक्षणात् सत्यम् अभिमतत्वलक्षणम् उपैमि प्राप्नोमि । मानुषात् मनुष्याचरणात् दैव्यं देवयोग्याचरणम् उपैमि प्राप्नोमि । दैवीं देवसंबन्धिनीं वाचं यच्छामि नियतां करोमि । संस्कृतभाषयैव व्यवहरामीत्यर्थः ॥

(१५६) कल्पः—"शल्कैरेताꣳरात्रिमेतमग्निमिन्धान आस्ते–शल्कैरग्निमिन्धान उभौ लोकौ सनेमहमुभयोर्लोकयोर्ऋद्ध्वाऽति मृत्युं तराम्यहमित्येतया" इति । (शल्कैरिति–) अहं शल्कैः काष्ठलेशैः अग्निमिन्धानः प्रज्वालयन् उभौ लोकौ एतल्लोकपरलोकौ सनेम् संजयेयम् । तयोः उभयोर्लोकयोर्ऋद्ध्वा समृद्धो भूत्वा मृत्युम् अहम् अति अतिशयेन तरामि ॥

---

१ आप. श्रौ. सू. ५. ८. ८. । २ आप. श्रौ. सू. ५. ८. ८. । ३ आप. श्रौ. सू. ५. ८. ९. ।
४ आप. श्रौ. ५. ८. ४. ।

तेराम्यहम् । [157]जातवेदो भुवनस्य रेतः । इह सिञ्च तपसो यज्जनिष्यते (१५)।
अग्निमश्वत्थादधि हव्यवाहम् । शमीगर्भाज्जनयन्यो मयोभूः । [158]अयं ते योनि-
र्ऋत्वियः । यतो जातो अरोचथाः । तं जानन्नग्न आरोह । अथा नो वर्धया
रयिम् । [159]अपेत वीत वि च सर्पतातः । येऽत्र स्थ पुराणा ये च नूतनाः ।
अदादिदं यमो वसानं पृथिव्याः । अक्रन्निमं पितरो लोकमस्मै (१६) ।
[160]अग्नेर्भस्मास्यग्नेः पुरीषमसि । [161]संज्ञानमसि कामधरणम् । मयि ते कामधरणं
भूयात् । [162]सं वः सृजामि हृदयानि । सꣳसृष्टं मनो अस्तु वः । सꣳसृष्टः

( १५७ ) कल्प —"तस्मिन्नुपर्युपमरणी निष्टपति—जातवेदो भुवनस्य रेत इह सिञ्च तपसो यज्जनिष्यते अग्निमश्वत्थादधि हव्यवाह शमीगर्भाज्जनयन्यो मयोभूरयं ते योनिर्ऋत्विय इत्येताभ्याम्" इति । द्वितीयमन्त्र संहितायामपि पठितत्वात्सम्प्रदायेन सर्वोऽपि न पठित । (जातवेद इति-) हे जातवेदः! आहवनीयाग्ने! भुवनस्य रेतः सर्वलोकस्य कारणभूतमाधातव्याग्निरूपम् इह सिञ्च अनयोररण्योर्निषिञ्च । यत् रेतस्तपसोऽस्मात्सन्तापनाज्जनिष्यत उत्पत्स्यते तादृश रेत सिञ्चेति पूर्वेणान्वय । योऽग्निराधातव्यो मयोभूः सुखस्य भावयिता हव्यवाहं हविषो वोढारं शमीगर्भात् अरणिरूपादश्वत्थात् जनयन् जनयितुकामो निषिञ्चेति पूर्वेणान्वय ॥

( १५८ ) द्वितीयमन्त्रपाठस्तु—(अयमिति-) हे जनयितव्याग्ने! अयम् अरणिद्वयरूप ते तवोत्पत्त्यर्थम् ऋत्वियः योनिः ऋतुयुक्तमुत्पत्तिस्थान यतो योने जातः त्वम् अरोचथाः लोके दीप्तिमानासी । योनिमेतदरणिरूप जानन्नारोह । अथ अनन्तर नः अस्माक रयिं धन वर्धय ॥

( १५९ ) कल्प —"अपेत वीतेति गार्हपत्यायतनमुद्धत्य" इति । यमपुरुषा सर्वोऽप्यन्ते । यैममेव देवयजनमस्मै नियोज्य" इत्येतन्मन्त्रब्राह्मणे समाम्नानात् । (अपेतेति-) हे यमपुरुषा ! अत्र अस्मिन्देशे पुराणा ये यूयं स्थ नूतनाः च ये यूय स्थ ते सर्वेऽप्यतो देशात् अपेत अपगच्छत । अपगम्य च वीत परस्पर विमुक्ता गच्छत । पुनरपि वि दूर सर्पत । यमो राजेदमवस्थानम् अदात् यजमानाय दत्तवान् । पितरः येम लोकं स्थानविशेषम् अस्मै यजमानार्थम् अक्रन् कृतवन्त ॥

( १६० ) कल्प —'सिकतानामर्धं द्वेधा विभज्यार्धं गार्हपत्यायतने निवपत्यर्धं दक्षिणाग्नेरर्धं त्रेधा विभज्य पूर्वेध्यैतेनैव कल्पेन सर्वान्पार्थिवान्निवपति । अग्नेर्भस्मासीति सिकता निवपति" इति । पाठस्तु—हे सिकते! अग्नेर्भस्म भासमानहेतु त्वम् असि तथा अग्नेः पुरीषं पूरणहेतुस्त्वम् असि ॥

( १६१ ) कल्प —"संज्ञानमित्यूषानिवपत्यदन्मासि कृष्ण तद्विहास्त्वेति मनसा ध्यायति" इति । पाठस्तु—(संज्ञानमिति-) हे ऊष! संज्ञानं सम्यग्ज्ञानहेतु कामधरणं कामाना धारणहेतुश्च त्वम् असि । ते त्वदीय यत् कामधरणं कामधारणसामर्थ्यं तत् मयि अपि भूयात् ॥

( १६२ ) कल्प —"सं वो वः प्रियास्तनुव इत्येषा । सं वः सृजामि हृदयानि सꣳसृष्टं मनो अस्तु वः सꣳसृष्टः प्राणो अस्तु व इत्येताभ्यां वानस्पत्यान्सꣳसृज्य सिकतास्वभिनिवपति" इति । अत्र "सं वः सृजामि" इति मन्त्र पूर्वसमाम्नात । (सं व इति-) हे वानस्पत्यसम्भारा ! वः युष्माकं हृदयानि संसृजामि परस्परमनुरक्तानि करोमि । तथा च युष्माकं मनः वचश्च संसृष्टमस्तु । हृदयवाक्येन परस्परस्नेहोऽपि विवक्षित । मनोवाक्येन कार्यैकमत्यम् । तथा वः युष्माकं प्राण च संसृष्टोऽस्तु । अनेनैकविधा प्रवृत्तिर्विवक्षिता ॥

१ आप श्रौ. सू. ५ ८. ५ । २ आप श्रौ सू. ५. ९ १. । ३ तै. ब्रा २. ५. ११ ।
४ आप. श्रौ. सू. ५ ९. ४-५-६. । ५ आप. श्रौ. सू. ५ ९. ६ । ६ आप श्रौ. सू. ५. १०. २. ।
७ यद्विभज्य निवप" इति पा० ।

प्राणो अस्तु वः । [163] सं या वः प्रियास्तनुवः । सं प्रिया हृदयानि वः । आत्मा वो अस्तु सं प्रियः । सं प्रियास्तनुवो मम (१७) । [164] कल्पेतां द्यावापृथिवी । कल्पन्तामाप ओषधीः । कल्पन्तामग्नयः पृथक् । मम ज्यैष्ठ्याय सव्रताः । [165] येऽग्नयः समनसः । अन्तरा द्यावापृथिवी । वासन्तिकावृतू अभिकल्पमानाः । इन्द्रमिव देवा अभिसंविशन्तु । [166] दिवस्त्वा वीर्येण । पृथिव्यै महिम्ना (१८) अन्तरिक्षस्य पोषेण । सर्वपशुमादधे । [167] अजीजनन्नमृतं मर्त्यासः । अस्रेमाणं तरणिं वीडुजम्भम् । दश स्वसारो अग्रुवः समीचीः । पुमांसं जातमभिसंरभन्ताम् । [168] प्रजापतेस्त्वा प्राणेनाभिप्राणिमि । पूष्णः पोषेण मह्यम् । दीर्घायुत्वाय शतशारदाय । शतं शरद्भ्य आयुषे वर्चसे (१९) ।

(१६३) "सं यो वः" इति मन्त्रस्य संहितायामाम्नातत्वात्प्रतीकमात्रं सूत्रे दर्शितम् । इह तु सर्वोऽप्येवमाम्नातः । (समिति-) हे वानस्पत्यसंभाराः ! वः युष्माकं याः प्रियास्तनुवः ताः संसृज्यन्तामेकस्मिन्नेव कार्ये प्रवर्तन्ताम् । तथा वो युष्माकं प्रियाणि हृदयानि च संसृज्यन्ताम् । तथा वः युष्माकं प्रिय आत्मा जीवश्च संसृज्यताम् । तथा मम प्रियास्तनुवः अपि संसृज्यन्ताम् । एकस्मिन्कार्ये प्रवर्तन्ताम् । ऋत्विग्भिः सह शरीरबहुत्वम् ॥

(१६४) कल्पः—"कृत्तिकासामनसीभ्यामग्नीन्यजमान उपतिष्ठते—कल्पेतां द्यावापृथिवी येऽग्नयः समनसः" इति । तत्र कृत्स्नाभिधायिन्या ऋचः पाठस्तु—(कल्पेतामिति-) द्यावापृथिव्यादयः सर्वे मम ज्यैष्ठ्याय उत्तमफलसिद्धये सव्रताः मदीयेन कर्मणा युक्ताः सन्तः स्वस्वव्यापारसमा भवन्तु ॥

(१६५) सामनस्याभिधायिकाया ऋचः पाठस्तु—(य इति-) हेऽग्ने ! द्यावापृथिव्योर्मध्ये त्वया सह समानमनस्का येऽग्नयः सन्ति ते सर्वेऽपि वासन्तिकावृतू मत्संबन्धिनौ वासन्तिकमासौ चैत्रवैशाखाख्यौ अभिकल्पमानाः सर्वतः संपादयन्तस्त्वाम् अभितः संविशन्तु । यथा देवा इन्द्रम् अभिसंविशन्ति तद्वत् ॥

(१६६) अनन्तरमन्त्रस्तु गार्हपत्याधानमन्त्राणां मध्ये सूत्रकारेणोदाहृतः । पाठस्तु—(दिव इति-) हे गार्हपत्य ! द्युलोकस्य वीर्येण पृथिव्याश्च यो महिमा अन्तरिक्षस्य यत् पोषं सामर्थ्यं तैः सर्वैरपि सर्वपशुप्रदानसमर्थं त्वामिहाऽऽयतने आदधे ॥

(१६७) कल्पः—"अजीजनन्नमृतं मर्त्यासोऽस्रेमाणं तरणिं वीडुजम्भं दश स्वसारो अग्रुवः समीचीः पुमांसं जातमभिसंरभन्तामिति जातमग्निमभिमृशति" इति । (अजीजनन्निति-) मर्त्यासः मनुष्या ऋत्विजः अमृतं मरणरहितमग्निं देवम् अजीजनन् उत्पादितवन्तः । कीदृशमग्निम् ? अस्रेमाणम् अगम्यमशोषणीयं वा । स्रिवु गतिशोषणयोरिति धातुः । तरणिं दुःखेभ्यस्तारकं वीडुजम्भं दृढदन्तमूलम् अग्रुवः अङ्गुलयश्चाध शरीरेण सहोत्पन्नत्वात् स्वसारो भगिनीसमानाः । दशसंख्याकास्ता अङ्गुलयः समीचीः अनुकूला भूत्वा जातमग्निरूपं पुमांसम् अभिसंरभन्ताम् अभितः संस्पृशन्तु ॥

(१६८) कल्पः—"जातं यजमानोऽभिप्राणिति—प्रजापतेस्त्वा प्राणेनाभिप्राणिमि पूष्णः पोषेण मह्यं दीर्घायुत्वाय शतशारदाय शतं शरद्भ्य आयुषे वर्चसे जीवात्वै पुण्याय" इति । हेऽग्ने प्रजापतेः प्राणेन प्राणवायुना त्वा त्वाम् अभि लक्ष्य प्राणिमि श्वासं करोमि । तथा पूष्णः देवस्य पोषेण सामर्थ्येन वा अभिप्राणिमि । किमर्थं मह्यं मम शतशारदाय दीर्घायुत्वाय शतसंवत्सरपरिमितं यद्दीर्घायुस्तत्सिद्धये । किं च

१ तै. सं. ४. २. ४. । २ आप. श्रौ. सू. ५. १०. ४. । ३ आप. श्रौ. सू. ५. ११. ६. ।
४ आप. श्रौ. सू. ५. ११. ५. ।

जीवात्यै पुण्याय । [1]अहं त्वदस्मि मदसि त्वमेतत् । ममासि योनिस्तव योनि-
रस्मि । ममैव सन्वह हव्यान्यग्ने । पुत्रः पित्रे लोककृज्जातवेदः । [2]प्राणे त्वाऽ-
मृतमादधामि । अन्नादमन्नाद्याय । गोप्तारं गुप्त्यै । [3]सुगार्हपत्यो विदहन्नरातीः ।
उषसः श्रेयसीः श्रेयसीर्दधत् ( २० ) । अग्ने सपत्नाँ अपबाधमानः । राय-
स्पोषमिषमूर्जमस्मासु धेहि । [4]इमा उ मामुपतिष्ठन्तु रायः । आभिः प्रजाभि-
रिह संवसेय । इहो इडा तिष्ठतु विश्वरूपी । मध्ये वसोर्दीदिहि जातवेदः ।
ओजसे बलाय त्वोद्यच्छे । वृषणे शुष्मायाऽऽयुषे वर्चसे । सपत्नतूरसि

शतं शरद्भ्यः शतसङ्ख्याकेभ्यः संवत्सरेभ्य ऊर्ध्वमप्यायुःसिद्धये वर्चसे बलाय जीवात्यै जीवनोपधाय पुण्याय सुकृतसिद्धये च ॥

( १६९ ) कल्प —"अहं त्वदस्मि मदसि त्वमेतन्ममासि योनिस्तव योनिरस्मि ममैव सन्वह हव्यान्यग्ने पुत्रः पित्रे लोककृज्जातवेद इत्याधीयमानमनुमन्त्रयते यजमान" इति । (अहमिति–) हे आहवनीयाग्ने ! अहं त्वत्तो हेतोः अस्मि । यदा त्वम् आसीस्तदानीमहमस्मि । यदा तु त्वं नाऽऽसीस्तदानीं विद्यमानोऽप्यहं निष्प्रयोजनत्वेन नास्मि । त्वं च मदसि मत्तो हेतोर्जायसे । एतत् च प्रत्यक्षम् । एवमुक्तप्रकारेण मम योनिः कारणं त्वमसि । तव अपि योनिः कारणमहम् अस्मि । तस्मात् ममैव बन्धुः सन्मदीयानि हव्यानि वह । हे जातवेदः ! यथा लोके पुत्रः पित्रे लोककृत् पुण्यलोकसम्पादको भवति तद्वदतिस्नेहेन मम लोककृत् भव ॥

( १७० ) अनन्तरमन्यो गार्हपत्याधानमन्त्रेषु सूत्रकृतोदाहृत —(प्राण इति–) पाठस्तु—हे गार्हपत्य ! प्राणे अस्मदीये निमित्तभूते सति तद्रक्षार्थम् अमृतं त्वामादधामि । ममान्नाद्यसिद्धये अन्नादं मम गुप्त्यै रक्षणसिद्धये गोप्तारं त्वादधामि ॥

( १७१ ) कल्प —"सुगार्हपत्यो विदहन्नरातीरुषसः श्रेयसी श्रेयसीर्दधदग्ने सपत्नाँ अपबाधमानो रायस्पोषमिषमूर्जमस्मासु धेहीत्याधीयमानमभिमन्त्रयते यजमान" इति । (सुगार्हपत्य इति–) सुगार्हपत्यः शोभनो गार्हपत्योऽयमग्निः अरातीः द्वेषिणो [ विदहन् ] विशेषेण दहन् उषसः दिवसान् श्रेयसीः श्रेयसीर्दधत् उत्तरोत्तरश्रेष्ठान्कुर्वन्वर्तते । हे अग्ने गार्हपत्य ! सपत्नान् अस्मदीयाञ्शत्रून् अपबाधमानः पीडयन्धनपुष्टिमन्नरसं च अस्मासु सम्पादय ॥

( १७२ ) कल्प —"इमा उ मामुपतिष्ठन्तु राय आभिः प्रजाभिरिह संवसेयेहो इडा तिष्ठतु विश्वरूपी मध्ये वसोर्दीदिहि जातवेद इति प्राञ्चोऽश्वप्रथमा अग्निप्रव्रजन्ति" इति । (इमा इति–) इमा उ रायः लोके दृश्यमानानि सर्वाण्यपि धनानि मामुपतिष्ठन्तु प्राप्नुवन्तु । आभिः पुत्रपौत्रादिभिः प्रजाभिः सह इह अस्मिञ्जन्मनि संवसेय सम्यक्तिष्ठामि । किंच इहो इहैव जन्मनि विश्वरूपी महिष्यजाधनेकपशुरूपयुक्ता इडा गौः तिष्ठतु । हे जातवेदः ! त्वमस्मदीयस्य वसोः मध्ये स्वामित्वेन स्थित्वा दीदिहि दीप्यस्व ॥

( १७३ ) कल्प —"गार्हपत्ये प्रणयनीयमाधत्याग्निमादीप्य सिकताभिरुपयमनीरुपकल्पयते तमुद्यच्छत्योजसे बलाय त्वोद्यच्छे वृषणे शुष्मायाऽऽयुषे वर्चसे सपत्नतूरसि वृत्रतूर्यस्ते देवेषु महिमा सुवर्गो यस्त आत्मा पशुषु प्रविष्टः पुष्टिर्या ते मनुष्येषु पप्रथे तया नो अग्ने जुषमाण एहि" इति । (ओजस इति–) हेऽग्ने ! त्वामोज प्रभृतिसिद्ध्यर्थम् उद्यच्छे । ओजो बलहेतुरष्टमो धातुः, बलं शरीरसामर्थ्यम्, वृषन् शब्दः सेचनसामर्थ्यवाची । शुष्मशब्दोऽत्र सहकारिसम्पादितां शक्तिमाचष्टे । आयुः प्रसिद्धम् । वर्चः कान्तिः ।

१ आप श्रौ सू ५ १६ १. । २ आप. श्रौ सू ५. १२ १३. । ३ आप श्रौ. सू ५. १४. ५ । ४ आप श्रौ. सू. ५. १३ ३–४. ।

शंभूः प्रजाभ्यस्तनुवे स्योनः । प्राणं त्वाऽमृत आदधामि । अन्नादमन्नाद्याय । गोप्तारं गुप्त्यै । यत्ते शुक्र शुक्रं वर्चः शुक्रा तनूः । शुक्रं ज्योतिरजस्रम् । तेन मे दीदिहि तेन त्वाऽऽदधे । अग्निनाऽग्ने ब्रह्मणा । आनशे व्यानशे सर्वमायुर्व्यानशे । ( २४ ) । नर्य प्रजां मे गोपाय । अमृतत्वाय जीवसे । जातां जनिष्यमाणां च । अमृते सत्ये प्रतिष्ठिताम् । अथर्व पितुं मे गोपाय । रसमन्नमिहाऽऽयुषे । अदब्धायोऽशीततनो । अविषं नः पितुं कृणु । शꣳस्य पशून्मे गोपाय । द्विपादो ये चतुष्पदः ( २५ ) । अष्टाशफाश्च य इहाग्ने । ये चैकशफा आशुगाः । सप्रथ सभां मे गोपाय । ये च सभ्याः सभासदः । तानि–

(१७९) अनन्तरमन्त्रा आहवनीयाधाने सूत्रकारेणोदाहृता । तत्पाठस्तु—(प्राणमिति–) हे ! आहवनीय प्राणरूपं [त्वा] त्वाम् अमृते स्थाने विनाशरहिते आदधामि । अस्माकमन्नाद्यसिद्ध्यर्थम् अन्नादं त्वामादधामि । रक्षणार्थं गोप्तारं त्वामादधामि । सोऽयमेको मन्त्रः ॥ हे शुक्र ! दीप्यमानाग्ने [ते] तव यच्छुक्रं वर्चः निर्मला कान्तिर्या च शुक्रा तनूः निर्मलो देहो यच्च अजस्रं निरन्तरं शुक्रं ज्योतिः निर्मलमितरभासकत्वं तेन सर्वेण युक्तो मे मदर्थं दीदिहि प्रकाशस्व तेन कारणेन हे अग्ने ! अग्निना अन्नागिप्रकाशकेन मन्त्रेण[त्वा]त्वाम् आदधे । अथ द्वितीयो मन्त्रः । अयमग्निः आनशे भोक्तृदेहं व्याप्तवान् व्यानशे विविधं भोग्यजातं व्याप्तवान् । तथा सर्वमायुः अपमृत्युपरिहारेण व्यानशे व्याप्तवान् । अयं तृतीयो मन्त्रः । तावेतौ द्वितीयतृतीयौ "घर्मं शिर" इत्यनुवाकेऽप्याम्नातौ । तयो प्राचीमिति मन्त्रैश्चतुष्प्रयोग सूत्रान्तरे द्रष्टव्यः । यद्वाऽस्यानुवाकस्य मन्त्रकाण्डानुरूपत्वाद् घर्मं शिर इत्यादिकमप्यनन्तरमेवेति दर्शयितु तदेकदेशोऽत्र पठितः । ब्राह्मणसंबन्धार्थं तत्राऽऽम्नानं द्रष्टव्यम् ॥

(१८०) यदुक्तं सूत्रकारेण—"अथ विराट्क्रमैर्यजमान उपतिष्ठते" इति, तत्र प्रथमं विराट्क्रममन्त्रमाह—(नर्य इति–) हे नर्य ! मनुष्येभ्यो हित गार्हपत्य मे मदीयां प्रजां गोपाय । किमर्थम् अमृतत्वाय जीवसे अपमृत्युरहितजीवनाय । कीदृशीं प्रजाम् ? [जाताम्] पूर्वमुत्पन्नाम् [जनिष्यमाणां] इत उपर्युत्पत्स्यमानां च । तथा [अमृते] अमृतत्वहेतौ सत्ये प्रतिष्ठितां सर्वदा सत्यवादिनीमित्यर्थः ॥

(१८१) अथ द्वितीयमाह—(अथर्व इति–) अथर्व ! पूर्वमथर्वाख्येन महर्षिणा मथितत्वात्तद्रूपत्वम् । तथा चान्यत्राऽऽम्नातम्—"अथर्वा त्वा प्रथमो निरमन्थदग्ने" इति । तादृश हे दक्षिणाग्ने मे पितुं मदीयमन्नं गोपाय । यो रसः क्षीरादिर्यच्चान्नं व्रीहियवादिकं तदुभयमिह शरीरे आयुषे आयुरर्थं स्थापयेति शेषः । हे अदब्धायः ! केनाप्यहिंसितागमन न खलु त्वदीयमागमनं केनचिदपि निवारयितुं शक्यम् । हे अशीततनो ! उष्णशरीर नः अस्मदीयं पितुम् अन्नम् अविषं विषरहितं [कृणु] कुरु ॥

(१८२) अथ तृतीयमाह—(शꣳस्येति–) हे शंस्य ! ऋत्विग्भिः प्रशस्यमानाऽऽहवनीय मे मम पशून्गोपाय ये पशवो द्विपादः मनुष्यरूपा येऽपि चतुष्पदः गवादिरूपास्तेष्वपि चतुष्पात्सु अष्टाशफाः गोमहिष्यादय एकशफाः [आशुगाः] आशुगामिनश्चाश्वादयो ये सन्ति तान्सर्वान् इह लोके हे अग्ने ! गोपाय ॥

(१८३) अथ चतुर्थमाह—(सप्रथेति–) प्रथया ख्यात्या सहित सप्रथः । तादृश हे सभ्य मे सभाम् अधिदेवनस्थानं गोपाय । ये च सभ्याः सभायोग्याः सभासदः सभायामुपविश्य सन्ति तान् सर्वान् इन्द्रियावतः चक्षुरादीन्द्रियपाटवयुक्तान् कुरु । ते च सभ्याः सर्वमायुः शतसंवत्सरमायुः उपासताम् सेवन्ताम् ॥

१ °चतुष्प्रयोग सू° इति पा० २ आप. श्रौ सू. ५. १८. २. । ३ °मृतत्वे° इति पा० ४ तै सं ४ १. ३. ।

न्द्रियावतः कुरु । सर्वमायुरुपासताम् । [1]अहे बुध्निय मन्त्रं मे गोपाय । यमृषयस्त्रैविदा विदुः । ऋचः सामानि यजूꣳषि । सा हि श्रीरमृता सताम् (२६)। पञ्चधाऽग्नीन्व्यक्रामत् । विराट्सृष्टा प्रजापतेः । ऊर्ध्वाऽऽरोहद्रोहिणी । योनिरग्नेः प्रतिष्ठितिः ( २७ ) ॥

विशान्तु न पुरूचीर्विधेम निधाय यथेऽग्नेदाहाय बृहतो ब्रह्मणा दुवस्वत विश्वचार इममूर्जते पुरोगा प्रजनयिष्यन्तो जनिष्यतेऽस्मै मसं महिम्ना यथंसे दधंस्तु-सतो भांहि सवभुवनस्यायुर्ध्यग्नि चतुष्पद सता प्रजापतेर्द्वे च ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणे प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

( १८४ ) अथ पञ्चममाह—(अहे बुध्नियेति) हे अहे आहिंसितव्य बुध्निय ! बुध्ने मूले जगदाधारत्वेनाऽऽवस्थित मे मदीयमृगादिरूपं मन्त्रं गोपाय । यं मन्त्रं त्रयीविदाः वेदत्रयाभिज्ञा ऋषयः अतीन्द्रियद्रष्टारो विदुः जानन्ति स मन्त्रं गोपायेति पूर्वेणान्वयः । वेदत्रयोक्ता मन्त्रविशेषा ऋगादयः । प्रयत्नेनाभिपालनं परित्यज्य मन्त्रपालनप्रार्थने कारणमुच्यते—सतां सन्मार्गवर्तिनामृगादिरूपा सा खलु अमृता श्रीः । धनादिरूपाया श्रियो बहुधा विनाशः समायाति । ऋगादिरूपायास्तु पुनः पुनरभ्यासेनाभिवृद्धिरेव न तु क्षयः ॥

( १८५ ) कल्पः—"पञ्चधाऽग्नीन्व्यक्रामद्विराट् सृष्टा प्रजापतेरूर्ध्वाऽऽरोहद्रोहिणी योनिरग्नेः प्रतिष्ठितिरिति सर्वान्" इति । (पञ्चधेति-) यजमान उपतिष्ठत इत्यनुवर्तते । प्रजापतेः सकाशात् सृष्टा विराट् विशेषेण राजमाना गोशरीरधारिणी तानेतान् अग्नीन् पञ्चधा व्यक्रामत् विभज्य क्रान्तवती । अस्मिन्नग्नौ गार्हपत्योऽस्मिन्नाहवनीय इत्येवं पदेनाऽऽक्रम्य दर्शितवतीत्यर्थः । सा पुनः स्वस्या अग्नौ जननविशेषमेव पश्यन्त्यूर्ध्वाभिमुखी द्युलोकम् आरोहत् । आरुह्य च रोहिणी अभूत् । सा च अग्नेः योनिः कारणभूता प्रतिष्ठाहेतुश्च रोहिणीनक्षत्रेऽग्नीनामाधेयत्वात् ॥

अत्र विनियोगसंग्रहः—उद्धन्यभूमिमुद्धन्ति शं नो देवीरवोक्षति । देवेति सिकतास्तूष्णीं मयेत्यूषानपैस्तथा ॥ १ ॥ ऊतीरुद्गवरीयं चोर्णं वल्मीकवपां प्रजाम् । सूदं यस्य तु वाराहीमुद्ग सस्य प्रापनकम् ॥ २ ॥ यामिशु शर्करा अग्ने स्वर्गमश्वेति पिप्पलम् । ऊर्जं औदुम्बरं गायत्रद्वाभ्यां पर्णं यया शमीम् ॥ ३ ॥ यतो विकङ्कतं यतो ऽशनिदस्य तरु तथा । चित्रीत्यश्वत्थमिभोऽश्वत्थादरणिमन्त्रणम् ॥ ४ ॥ यो अश्वारण्युपादानं सं त्वा समारोदनम् । प्रदेश मध्यदिने होमस्त्वग्निं समिधं क्षिपेत् ॥ ५ ॥ समिन्धेमिस्त्वं राजन्यस्त्वा नयेण स वैश्यकः । प्रजा अत्र प्रयच्छाति गार्ही अरणिवीक्षणम् ॥ ६ ॥ आरोहऽरणी प्रयच्छाति ऋत्विग्द्वाभ्यां तु मन्त्रणम् । अत याथ नियम्यार्थं तस्कै रात्री समिध्यते ॥ ७ ॥ जात द्वाभ्यां शतस्मावरणे निष्टपेत्तथा । अयेति स्थानमुद्धन्यादमेस्तु सिकता वपेत् ॥ ८ ॥ सं वो द्वाभ्यां तु संभारान्वानस्पत्यान्प्रसक्त्येत् । ऋग्द्वाभ्यामसदुपस्थानं दिवस्त्वा पथि मानसम् ॥ ९ ॥ आधत्तेऽजीजनस्त्वामिमच्छौ धारयेत्प्रजा । जात प्राणेत्यह पूर्वोक्तत्वाधानेऽभिमन्त्रयेत् ॥ १० ॥ प्राणे त्वा पश्चिमाधानं मुगार्हेस्त्वभिमन्त्रणम् । इमा प्राञ्चोऽभियान्त्योऽन्याभिरस्थम्यतेऽनल ॥ ११ ॥ प्राची निभि पूर्वमानं मदि त्वभ्यभिमन्त्रणम् । प्राण द्वाभ्यां पूर्वमहेराधानं त्वनुमन्त्रयेत् ॥ १२ ॥ उपस्थितिर्द्वयं पञ्च यजुर्वेदे समीक्षते । इह मन्त्रुरुपस्थानं पञ्च सर्वाभिमन्त्रणम् ॥ अत्राऽऽधानगताः मन्त्राः द्वासप्ततिरुदीरिताः ॥ १३ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे द्वितीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

१ अस्मात्पूर्वं—(१)"चतुः शिखण्डा युवतिः सुपेशा । घृतप्रतीका भुवनस्य मध्ये । मर्मृज्यमाना महते सौभगाय । मह्यं धुक्ष्व यजमानाय कामान् (२) इहैव सन्तः सुतो वो अग्नयः । प्राणेन वाचा मनसा बिभर्मि । तिरो मा सन्तमायुर्मा प्रहासीत् । ज्योतिषा वो वैश्वानरेणोपतिष्ठे ।" इति मन्त्रौ मूले वर्तेते । परमनयोराधानाङ्गत्वाभावात्तान्न संग्रहः । २ आप. श्रौ सू. ५ १८ २ । ३ "ऊर्ध्वाऽऽरोहद्रोहिणी" इति पा०

(तै. ब्रा. कां. २ प्र. ५ अ. ८)

उपावरोह जातवेदः पुनस्त्वम् । देवेभ्यो हव्यं वह नः प्रजानन् । आयुः प्रजाꣳरयिमस्मासु धेहि । अजस्रो दीदिहि नो दुरोणे ॥

(तै. आ. प्र. ४ अ. २२)

यास्ते अग्ने घोरास्तनुवः । क्षुच्च तृष्णा च । अस्नुक्चानाहुतिश्च । अशनया च पिपासा च । सेदिश्चामतिश्च । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ।

(तै. आ. प्र. ४ अ. २३)

लिक्च लिक्चिश्च लिहिंतिश्च । उष्णा च शीता च । उग्रा च भीमा च । सदाम्नी सेदिरनिरा । एतास्ते अग्ने घोरास्तनुवः । ताभिरमुं गच्छ । योऽस्मान्द्वेष्टि । यं च वयं द्विष्मः ॥

---

(१८६) (उपावरोहेति-) हे जातवेदः! पुनरपि त्वमुपावरोह अरण्योः सकाशाद्भूमावपतर। अवतीर्य च प्रजानन् अस्य देवस्येदं हविरिति प्रकर्षेण जानन् नः अस्मदीयं हव्यं देवेभ्यो वह प्रापय। आयुरादिकमस्मासु संपादय। अजस्रः निरन्तरं वर्तमानस्त्वं नो दुरोणे अस्मदीये गृहे दीदिहि दीप्यस्व। एतस्य विनियोगमापस्तम्ब आह—"उपावरोह जातवेद इति वर्तमानमभिमन्त्रयते" इति ॥

(१८७) कल्पः—"व्याख्याता घोरास्तन्वोऽरण्योऽनुवाक्यौ गण उत्तरौ चानुवाकौ" इति। घोरतनूनां प्रतिपादकौ द्वावनुवाकौ, तन्नोपकाराम्य आधानप्रतिपादके सूत्रे व्याख्याताः। अरण्योऽनुवाक्यो भवन्तीति हि तत्सूत्रेऽभिहितम्। तथा द्वयोरनुवाकयोर्मन्त्रगण उक्तः। ■ च विकल्पितः। तस्य विनियोगो राजसूयप्रकरणे सूत्रकारेणाभिहितः—"मारुतमेकविंशतिकपालं निर्वपति वैश्वदेवीमामिक्षां तस्यारण्योऽनुवाक्यैर्गणैः कपालान्युपदधाति" इति। ब्राह्मणं चाऽऽम्नातम्—"योऽरण्योऽनुवाक्यो गणस्तं मध्यत उपदधाति" इति। तत्र घोरतनुप्रतिपादकं प्रथममनुवाकमाह—(यास्त इति-) हे अग्ने ते तव सम्बन्धिन्यो घोराः अत्युग्राः तनुवः याः सन्ति। कास्ता इति चेत्, क्षुदादिभिरमत्यन्तैरष्टाभिः शब्दैः प्रतिपादिताः। हे अग्ने! ते तव संबन्धिन्य एता उक्ता घोरास्तनुवः, ताभिः तनुभिः सह यः अस्माकं द्वेष्टा यश्च द्वेष्यः अमुं द्विविधं पुरुषं गच्छ ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके द्वाविंशोऽनुवाकः ॥ २२ ॥

---

(१८८) अथ घोरतनुप्रतिपादकं द्वितीयमनुवाकमाह—लिक्चादीन्यनिरान्तानि तनुनामानि। अन्यत् पूर्ववत् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयारण्यकभाष्ये चतुर्थप्रपाठके त्रयोविंशोऽनुवाकः ॥ २३ ॥

इति कृष्णयजुर्वेदीयमाधानप्रकरणं समाप्तम् ॥

---

१ आप. श्रौ. सू. ५. १०. १२. । २ आप. श्रौ. सू. १८. ११. १२. । ३ तै. ब्रा. १. ७. ५. ।

# आधानमन्त्रवाक्यसूची ।

इत्याधानमन्त्रवाक्यसूची समाप्ता ।



कृष्णयजुर्वेदीयं

# पुनराधानप्रकरणम् ।

## पदभाष्यसहिता पुनराधेयसंहिता ॥

तत्र प्रथमकाण्डे पञ्चमप्रपाठके प्रथमोऽनुवाकः ।

हरिः ॐ ।

देवासुराः संयत्ता आसन्ते देवा विजयमुपयन्तोऽग्नौ वामं वसु सं न्यदधतेदमु नो भविष्यति यदि नो जेष्यन्तीति तदग्निर्न्यकामयत तेनापाक्रामत्ते देवा विजित्यावरुरुत्समाना अन्वायन्तदस्य सहसाऽदित्सन्त सोऽरोदीद्यदरो-

देवासुरा इति देव-असुराः । संयत्ता इति सम्-यत्ताः । आसन् । ते । देवाः । विजयमिति वि-जयम् । उपयन्त इत्युप-यन्तः । अग्नौ । वामम् । वसु । सम् । नीति । अदधत । इदम् । उ । नः । भविष्यति । यदि । नः । जेष्यन्तीति । इति । तत् । अग्निः । नीति । अकामयत । तेन । अपेति । अक्रामत् । तत् । देवाः ।

### सायणाचार्यविरचितं पुनराधेयभाष्यम् ।

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥
[अध्वर्योः प्रकृतौ मन्त्राः प्रपाठकचतुष्टये ।
वर्णिताः पुनराधेयं पञ्चमाद्ये प्रवक्ष्यते ॥ २ ॥
आधानादूर्ध्वमेवैषा कर्तव्या पुनराहितिः ।
तथाऽप्यध्ययनस्यायं क्रमो वस्तुत्वतः ॥ ३ ॥
सरस्वती स्वपुत्राय तद्बुद्धिस्थे क्रमे वरम् ।
ददौ तेन क्रमेणैव पठन्त्यन्येऽपि पाठकाः ॥ ४ ॥
एकादशानुवाकाः स्युः पञ्चमेऽस्मिन्प्रपाठके ।
तत्रादौ पुनराधेयमनुवाकचतुष्टये ॥ ५ ॥
ततः षट्केऽग्न्युपस्थानं काम्यवाज्यास्तथाऽन्तिमे ।
विधीयतेऽनुवाकेऽस्मिन्नादिमे पुनराहितिः ॥ ६ ॥]

उद्वास्य पुनरादधीतेति विधास्यति । तत्र पुनराधेयस्याग्निदेवतां विधातुमग्निविषयमुपाख्यानमुदाहरन्प्रसङ्गाद्रजतस्य यज्ञे दक्षिणात्वं निषेधति—

(१) (देवासुरा इति-) देवाश्च असुराश्च संयत्ता युद्धयुक्ताः । विजयम् । [उपयन्तः] प्राप्नुवन्तो देवाः तदा तेभ्यः असुरेभ्यः अपहृतं मणिमुक्तादिकं श्रेष्ठं वसु रक्षार्थमग्नौ [ संन्यदधत ] निक्षिप्तवन्तः । कथंचिदसुराणां विजये सत्येतद्धनमस्माकमापत्सु उपयुज्यतेति देवानामाशयः । तत् धनम् अग्निर्न्यकामयत इच्छां कृतवान् । तेन धनेन सह अपाक्रामत् पलायनमकरोत् । देवाः युध्यन्तो असुरान् विजित्य तत् धनम् अवरुरुत्समानाः अवरोद्धुमिच्छावन्तः अनु अग्नेः पश्चात् आयन् तत् धनं बलात्कारेणाऽऽदातुमिच्छावन्तः ।

दीत्तद्रुद्रस्य रुद्रत्वं यदश्र्वशीयत तत् (१) रजतꣳ हिरण्यमभवत्तस्माद्रजतꣳ हिरण्यमदक्षिण्यमश्रुजꣳ हि यो बर्हिषि ददाति पुराऽस्य संवत्सराद्गृहे रुदन्ति तस्माद्बर्हिषि न देयꣳ सोऽग्निरब्रवीद्भाग्यसान्यथ व इदमिति पुनराधेयं ते केवलमित्यब्रुवन्नृध्नवत्खलु स इत्यब्रवीद्यो मद्देवत्यमग्निमादधाता इति तं पूषाऽधत्त तेन (२) पूषाऽऽर्ध्नोत्तस्मात्पौष्णाः पशव उच्यन्ते तं त्वष्टाऽधत्त तेन त्वष्टाऽऽर्ध्नोत्तस्मात्त्वाष्ट्राः पशव उच्यन्ते तं मनुराऽधत्त तेन मनुरार्ध्नोत्तस्मान्मानव्यः प्रजा उच्यन्ते तं धाताऽधत्त तेन धाताऽऽर्ध्नोत्संवत्सरो वै धाता तस्मात्संवत्सरं प्रजाः पशवोऽनु प्र जायन्ते य एवं पुनराधेयस्यर्द्धिं वेद (३) ऋध्नोत्येव योऽस्यैवं बन्धुतां वेद बन्धुमान्भवति भागधेयं वा अग्निराहित

विजित्येति वि-जित्य। अवरुरुत्समाना इत्यव-रुरुत्समानाः। अन्विति। आयन्। तत्। अस्य। सहसा। आदित्सन्त। सः। अरोदीत्। यत्। अरोदीत्। तत्। रुद्रस्य। रुद्रत्वमिति रुद्र-त्वम्। यत्। अश्रु। अशीयत। तत्। (१) रजतम्। हिरण्यम्। अभवत्। तस्मात्। रजतम्। हिरण्यम्। अदक्षिण्यम्। अश्रुजमित्यश्रु-जम्। हि। यः। बर्हिषि। ददाति। पुरा। अस्य। संवत्सरादिति सं-वत्सरात्। गृहे। रुदन्ति। तस्मात्। बर्हिषि। न। देयम्। सः। अग्निः। अब्रवीत्। भागी। असानि। अथ। वः। इदम्। इति। पुनराधेयमिति पुनः-आधेयम्। ते। केवलम्। इति। अब्रुवन्। ऋध्नवत्। खलु। सः। इति। अब्रवीत्। यः। मद्देवत्यमिति मत्-देवत्यम्। अग्निम्। आदधाता इत्या-दधातै। इति। तम्। पूषा। एति। अधत्त। तेन। (२) पूषा। आर्ध्नोत्। तस्मात्। पौष्णाः। पशवः। उच्यन्ते। तम्। त्वष्टा। एति। अधत्त। तेन। त्वष्टा। आर्ध्नोत्। तस्मात्। त्वाष्ट्राः। पशवः। उच्यन्ते। तम्। मनुः। एति। अधत्त। तेन। मनुः। आर्ध्नोत्। तस्मात्। मानव्यः। प्रजा इति प्र-जाः। उच्यन्ते। तम्। धाता। एति। अधत्त। तेन। धाता। आर्ध्नोत्। संवत्सर इति सं-वत्सरः। वै। धाता। तस्मात्। संवत्सरमिति सं-वत्सरम्। प्रजा इति प्र-जाः। पशवः। अनु। प्रेति। जायन्ते। यः। एवम्। पुनराधेयस्येति पुनः-आधेयस्य। ऋद्धिम्। वेद। (३) ऋध्नोति। एव।

सः। अग्निः अरोदीत् रोदनं कृतवान्। प्रसङ्गाद्रुद्रशब्दस्य प्रवृत्तिनिमित्तं विधत्ते—यतो रोदनं कृतवांस्ततो रुद्रस्य रुद्रत्वं यदश्रु नेत्रात्समागतबिन्दु अशीयत भूमावपतत् तदश्रु हिरण्यम् अभवत् रजतरूपं धनम् अभवत्। अत्र हिरण्यशब्दस्य धनसामान्यवाचित्वात् रजतं हिरण्यम् इत्यविरुद्धम्। तस्याश्रुजत्वेन दक्षिणात्वायोग्यत्वात्तद्दाने संवत्सरात् अर्वागेतद्गृहे किंचिद्रोदननिमित्तं भवति तस्माद्बर्हिषि यज्ञे तत् न दद्यात्॥

(२) अग्निदेवत्या पुनराधेये विदधाति—(स इति-) आदावसाधारणेन भागेन युक्तो भवानि, पश्चादिदं वसु युष्मभ्यं दास्यामीत्यग्निनोक्ता देवास्तत्पुनराधेयमिति भागं ददुः। तेन तुष्टोऽग्निरिदमब्रवीत् यो मद्देवत्यं हविः कृत्वा अग्निं पुनरादध्यात्स खलु समृद्धिमानिति। तस्मात्समृद्ध्यर्थं पुनराधेयं हविरग्निदेवत्यं कुर्यादित्यर्थः॥

(३) तामेव समृद्धिमुदाहरणेन स्तौति—(तमिति-) पूषत्वष्टृमनुसंवत्सराभिमानिधातृभिः पश्वादिसमृद्धिर्लब्धा॥

(४) समृद्धिवेदनं प्रशंसति—(य इति-)॥

(५) पूषादिरूपस्याग्निबन्धुत्वस्य वेदनं प्रशंसति—(य इति-)॥

(६) पुनराधेयं विधत्ते—(भागधेयमिति-) प्रथमाधानेनाऽऽहितोऽग्निरसाधारणभागवाञ्छयाऽधिकोपद्रवं चकार, तच्छान्तिरनेन भवति। तस्मादुद्वासनेष्टया पूर्वाग्निम् उद्वास्य पुनः अग्निमादध्यात्। इष्टिमुद्वासनं च सूत्रकारो दर्शयति—"आग्नेयमष्टाकपालं निर्वपेद्वैश्वानरं द्वादशकपालं वारुणं दशकपालमग्नयेऽप्सुमतेऽष्टाकपालं मैत्रं चरुमग्निमुद्वासयिष्यन्" इति। "पौर्णमासीमिष्ट्वा ज्वलतोऽग्नीनुत्सृजति" इति च॥

इन्धमानः प्रजां पशून्यजमानस्योप दोद्रावोद्वास्य पुनरा दधीत भागधेयेनैवै-नꣳ सर्मर्धयत्यथो शान्तिरेवास्यैषा पुनर्वस्वोरा दधीतैतद्वै पुनराधेयस्य नक्षत्रं यत्पुनर्वसू स्वायामेवैनं देवतायामाधाय ब्रह्मवर्चसी भवति दर्भैरा दधात्ययात-यामत्वाय दर्भैरा दधात्यद्भ्य एवैनमोषधीभ्योऽवरुध्याऽऽ धत्ते पञ्चकपालः पु-रोडाशो भवति पञ्च वा ऋतव ऋतुभ्य एवैनमवरुध्याऽऽ धत्ते ( ४ ) ॥

(भर्तीयम् वसेन् वेद दर्भैः पञ्चविꣳशतिश्च ।)

यः । अस्य । पुशुम् । पुशुताम् । वेदं । बन्धुमानिति बन्धु-मान् । भवति । भागधेयमिति भाग-धेयम् । वै । अग्निः । आहित इत्या-हितः । इन्धमानः । प्रजामिति प्र-जाम् । पुशून् । यजमानस्य । उपेति । दोद्राव । उद्वास्येत्युत्-वास्य । पुनः । एति । दधीत । भागधेयेनेति भाग-धेयेन । एव । एनम् । समिति । अर्धयति । अथो इति । शान्तिः । एव । अस्य । एषा । पुनर्वस्वोरिति पुनः-वस्वोः । एति । दधीत । एतत् । वै । पुनराधेयस्येति पुनः-आधेयस्य । नक्षत्रम् । यत् । पुनर्वसू इति पुनः-वसू । स्वायाम् । एव । एनम् । देवतायाम् । आधायेत्या-धाय । ब्रह्मवर्चसीति ब्रह्म-वर्चसी । भवति । दर्भैः । एति । दधाति । अयातयामत्वायेत्ययातयाम-त्वाय । दर्भैः । एति । दधाति । अत्भ्य इत्यत्-भ्यः । एव । एनम् । ओषधीभ्य इत्योषधि-भ्यः । अवरुध्येत्यव-रुध्य । एति । धत्ते । पञ्चकपाल इति पञ्च-कपालः । पुरोडाशः । भवति । पञ्च । वै । ऋतवः । ऋतुभ्य इत्यृतु-भ्यः । एव । एनम् । अवरुध्येत्यव-रुध्य । एति । धत्ते (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमकाण्डे
पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

(७) कालं विधत्ते—(पुनरिति-) पुनरावर्तेते वासं वसतमोरिति पुनर्वसू । ततो नक्षत्रात्मिका देवता स्वकीया ॥

(८) पुनराधेयस्य प्रथमाधानविकृतिरूपत्वात्प्रथमाधानवत्प्राप्तेषु दर्भान्विधत्ते—(दर्भैरिति-) अन्यथा पुनराधाने गतसारत्वं स्यात् । अत एव सूत्रकार आह—"आयतनेषु पुराणान्दर्भान्संस्तीर्य भूमिर्भूम्नेति सर्वराशीभिर्गार्हपत्यमादधाति" इति ॥

(९) दर्भविधिमनूद्य प्रशंसति—(दर्भैरिति-) ऐन्द्रो वृत्रमहन्निलात्रो दार्भिकब्राह्मणे च दर्भाणामप्सारत्वाभिधानादद्भ्य ओषधिभ्यश्चात्वं च विस्पष्टम् ॥

(१०) अस्मिन्पुनराहितेऽग्नौ कर्तव्याया इष्टेरग्निर्देवता पूर्वं विहिता । अथ द्रव्यं विधत्ते—(पञ्चकपाल इति-) बहुवचनाक्रमे द्वादश मासाः पर्वतो हेमन्तशिशिरयोः समासेनैकत्वाभिधानादृतूनां पञ्चसंख्या ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे
पञ्चमप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

१ आप. श्रौ. सू. ५. २७. १ । २ तै. सं. २. ५. २. ।

अथ प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ।

[11]परा वा एष यज्ञं पशून्वपति योऽग्निमुद्वासयते पञ्चकपालः पुरोडाशो भवति पाङ्क्तो यज्ञः पाङ्क्ताः पशवो यज्ञमेव पशूनव रुन्धे [12]वीरहा वा एष देवानां योऽग्निमुद्वासयते न वा एतस्य ब्राह्मणा ऋतायवः पुराऽन्नमक्षन्पङ्क्त्यो याज्यानुवाक्या भवन्ति पाङ्क्तो यज्ञः पाङ्क्तः पुरुषो देवानेव वीरं निरवदायाग्निं पुनरा (१) धत्ते [13]शताक्षरा भवन्ति शतायुः पुरुषः शतेन्द्रिय आयुष्येवेन्द्रिये प्रति तिष्ठति [14]यद्वा अग्निराहितो नर्ध्यते ज्यायो भागधेयं निकामयमानो यदाग्नेयं सर्वं भवति सैवास्यर्द्धिः [15]सं वा एतस्य गृहे वाक्सृज्यते योऽग्निमुद्वासयते स

परेति । वै । एषः । यज्ञम् । पशून् । वपति । यः । अग्निम् । उद्वासयत इत्युत्–वासयते । पञ्चकपाल इति पञ्च–कपालः । पुरोडाशः । भवति । पाङ्क्तः । यज्ञः । पाङ्क्ताः । पशवः । यज्ञम् । एव । पशून् । अवेति । रुन्धे । वीरहेति वीर–हा । वै । एषः । देवानाम् । यः । अग्निम् । उद्वासयत इत्युत्–वासयते । न । वै । एतस्य । ब्राह्मणाः । ऋतायव इत्यृत–यवः । पुरा । अन्नम् । अक्षन् । पङ्क्त्यः । याज्यानुवाक्या इति याज्या–अनुवाक्याः । भवन्ति । पाङ्क्तः । यज्ञः । पाङ्क्तः । पुरुषः । देवान् । एव । वीरम् । निरवदायेति निः–अवदाय । अग्निम् । पुनः । एति । (१) धत्ते । शताक्षरा इति शत–अक्षराः । भवन्ति । शतायुरिति शत–आयुः । पुरुषः । शतेन्द्रिय इति शत–इन्द्रियः । आयुषि । एव । इन्द्रिये । प्रतीति । तिष्ठति । यत् । वै । अग्निः । आहित इत्या–हितः । न । ऋध्यते । ज्यायः । भागधेयमिति भाग–धेयम् । निका–

(११) द्वितीयानुवाके याज्याद्यङ्गजातं विधित्सुः पूर्वोक्तं द्रव्यविधिमनूद्य प्रशंसति—(परा वा इति–) परावपति विनाशयति । धानादिभिर्हविर्भिर्यज्ञः पाङ्क्तः । पङ्क्तिच्छन्दस्त्वात् पशुहेतुत्वात्पशवोऽपि पाङ्क्ताः ॥

(१२) याज्यानुवाक्ये विधत्ते—(वीरहेति–) देवानां मध्ये वीरोऽग्निः । तद्वधकारिणो यजमानस्यान्नमृतायवः सत्यमिच्छन्तो ब्राह्मणाः पुरा न एव अक्षन् नैव भुक्तवन्तः । "अश भोजने" इत्यस्य रूपम् । अग्ने समधाश्च न इत्याद्यमतस्य ऋचः पङ्क्तयः । तासु प्रधानहविषो द्वे स्विष्टकृतो द्वे । ताश्चाग्निकाण्डे–अग्निर्मूर्धेत्यनुवाके इष्टकोपधानार्थत्वेनाऽऽम्नाता । इह तु याजमानिकत्वाद्विधिः । शाखान्तरे तु याज्याप्रस्तावे समाम्नाता । पुरुषस्य हस्तद्वयपादद्वयशिरोभिः पञ्चभिः पाङ्क्तत्वम् । देवानेव देवानामेव मध्ये वीरमग्निं निरवदाय तत्सर्जनलक्षणमघमपाकृत्य ॥

(१३) याज्यापङ्क्तिषु विद्यमानाक्षरसंख्यया प्रशंसति—(शताक्षरा इति–) अग्ने समधाश्चेत्येषा प्रथमा चतुर्विंशत्यक्षरा । अर्धो द्वे कृते , आभिष्टे अद्येत्युभयोरेकैका पञ्चविंशत्यक्षरा । एभिर्नो अर्कैरित्यन्त्या षड्विंशत्यक्षरेति सम्भूय शतमक्षराणि । अण्डाभिमानिनो ब्रह्मणः स्वप्रमाणेन शतसंवत्सरायुष्ट्वात्तत्प्रतिपत्तिरस्यापि सामान्येन शतायुष्ट्वं, धर्माधर्माभ्यां तदुत्कर्षापकर्षौ भवतः । शतनाडीषु सञ्चारादिन्द्रियेषु शतसंख्या ॥

(१४) प्रधानकर्मण इव प्रयाजाज्यभागादङ्गानामप्याग्नेयत्वं विधत्ते—(यद्वेति–) यजमानस्य समृद्ध्यभावादग्नेः समृद्ध्यभावोऽनुमेयः ॥

(१५) संसिक्षो अग्न आज्यस्य वियन्त्वित्यादिषु चतुर्षु प्रयाजयाज्यासु सम्बुद्ध्यन्तादग्निशब्दात्पूर्वं सम्बुद्धिसप्तमीतृतीयाद्वितीयाविभक्त्यन्तानामग्निशब्दानां क्रमेण प्रयोगं विधत्ते—(सं वा इति–)अग्निमुद्वासयितुः एतस्य

वाच॑ꣳ स॒ꣳसृष्टां यज॑मान ई॒श्वरोऽनु॒ परा॑भवितो॒र्विभ॑क्तयो भवन्ति वा॒चो वि॒धृत्यै॒ यज॑मान॒स्याप॑राभावाय (२) "विभ॑क्तिं करोति॒ ब्रह्मै॒व तद॑क॒रु॒पा॒ꣳशु य॑जति॒ यथा॑ वा॒मं वसु॑ विविदा॒नो गूह॑ति ता॒दृगे॒व तद॒ग्निं प्रति॑ स्विष्ट॒कृतं॒ निरा॑ह॒ यथा॑ वा॒मं वसु॑ विविदा॒नः प्र॑का॒शं जिग॑मिषति ता॒दृगे॒व तद्वि॒भ॑क्तिमु॒क्त्वा प्र॑या॒जेन॒ वष॑ट्करोत्या॒यत॑नादे॒व नैति॒ यज॑मानो॒ वै पु॑रो॒डाशः॑ प॒शव॑ ए॒ते आहु॑ती य॒द॒भितः॑ पुरो॒डाश॑मे॒ते आहु॑ती (३) जु॒होति॒ यज॑मानमे॒वोभ॒यतः॑ प॒शुभिः॒ परि॑ गृह्णाति कृ॒तय॑जुः संभृ॑तसंभार॒ इत्या॑हु॒र्न सं॒भृत्याः॑ सं॒भारा॒ न यजुः॑ कर्त॒-

सयमान इति सि-युगमयमान । यत् । आग्नेयम् । सर्वम् । भवति । सा । एव । अस्य । स्वाहि । समिति । वि । एतस्य । गृहे । वाम । सृज्यते । य । अग्निम् । उद्वासयत इत्युत्-वासयते । स । वाचम् । सꣳसृष्टामिति सं-सृष्टाम् । यजमान । ईश्वर । अन्विति । पराभवितोरिति परा-भवितोः । विभक्तय इति वि-भक्तयः । भवन्ति । वाचः । विधृत्या इति वि-धृत्यै । यजमानस्य । अपराभावायेत्यपरा-भावाय । (२) विभक्तिमिति वि-भक्तिम् । करोति । ब्रह्म । एव । तत् । अकः । उपांश्वित्युप-अꣳशु । यजति । यथा । वामम् । वसु । विविदान । गूहति । तादृक् । एव । तत् । अग्निम् । प्रतीति । स्विष्टकृतमिति स्विष्ट-कृतम् । निरिति । आह । यथा । वामम् । वसु । विविदान । प्रकाशमिति प्र-काशम् । जिगमिषति । तादृक् । एव । तत् । विभक्तिमिति वि-भक्तिम् । उक्त्वा । प्रयाजेनेति प्र-याजेन । वषट् । करोति । आयतनादित्या-यतनात् । एव । न । एति । यजमान । वै । पुरोडाश । पशव । एते इति । आहुती इत्या-हुती । (३) जुहोति । आहुती इत्या-हुती । यत् । अभित । पुरोडाशम् । एते इति । आहुती इत्या-हुती । यजमानम् । एव । उभयत । पशुभिरिति पशु-भि । परीति । गृह्णाति । कृतयजुरिति कृत-यजु । सभृ-

वागृहे अवस्थिताना क्रोशादीना वाग्भि ससृज्यते तत्सया भवति ता वाचमनु यजमानः अधीतरवं लक्षण्यरूपस्तोत्रपंक्त्यामायात्पराभूतो भवति । एतासिस्तु विभक्तिभि पुनराधेयस्याभ्याधेयाद्विलक्षण्ये सति यजमानस्य विलक्षणत्वेन वाग्विधृतौ सत्या पराभव शाम्यति । विभक्तय सूत्रे दर्शिता —"अग्नेऽग्नेऽग्ना-यग्नेऽग्निनाऽग्नेऽग्निमग्न इति चतुर्षु प्रयाजेषु चतस्रो विभक्तीर्दधाति" इति । तथा चैव मन्त्रपाठ सपद्यते— "समिधोऽग्नेऽग्न आज्यस्य वियन्तु । तनूनपादग्नावग्न आज्यस्य वेतु । इडो अग्निनाऽग्न आज्यस्य वियन्तु । बर्हिरग्निमग्न आज्यस्य वेतु" इति ॥

(१६) यथोक्तविभक्तिविधिमनूद्य प्रशसति—(विभक्तिमिति-) तत् पुनराधेय ब्रह्मैव अन्याधेयात्परि-दृढमेव करोति ॥

(१७) अत्र मन्त्राणा नीचध्वानि विधत्ते—(उपांश्विति-) यथा लोके श्रेष्ठ वसु लब्धवान्गुरयो गोपायति तद्वत् ॥

(१८) स्विष्टकृत्युच्चध्वानि निधत्ते—(अग्निमिति-) निराह नि शेषध्वानि कुर्यात् यथा लोके श्रेष्ठ वस्तु लब्धवान्द्रव्यपति प्रसिद्धि गन्तुमिच्छति तद्वत् ॥

(१९) पूर्व विहितानां विभक्तीना प्रयाजमन्त्रसबन्ध विधत्ते—(विभक्तिमिति-) विभक्तिवचनप्रकारो दर्शित । तदुक्तिसहितेन प्रयाजमन्त्रेण वषट्कारपूर्व यजेत । तथा सति पूर्वोक्तवाक्ससर्गकृतपराभवरहित आयतनात् स्वगृहात् नैति न निर्गच्छति, किंतु स्वगृहे प्रतितिष्ठति ॥

(२०) पुनरर्जो निवर्तस्व, सह रय्या निवर्तस्वेत्याभ्या मन्त्राभ्यामाग्नेयपुरोडाशस्याग्रतादुपरिष्टाच्चाऽऽहुतिद्वय विधत्ते—(यजमान इति-)

(२१) अत्र चोदकप्राप्तान्संभाराधानमन्त्रान् वाजसनेयादिशाखान्तरमनुसृत्य पूर्वपक्षरूपेण निराचष्टे—

१ आप श्रौ सू ५ २८ ६ ।

व्यमित्थो खलु संभृत्यां एव संभाराः कर्तव्यं यजुर्यज्ञस्य समृद्ध्यै पुनर्निष्कृतो रथो दक्षिणा पुनरुत्स्यूतं वासः पुनरुत्सृष्टोऽनड्वान्पुनराधेयस्य समृद्ध्यै सप्त ते अग्ने समिधः सप्त जिह्वा इत्यग्निहोत्रं जुहोति यत्रयत्रैवास्य न्यक्तं ततः (४) एवैनमव रुन्धे वीरहा वा एष देवानां योऽग्निमुद्वासयते तस्य वरुण एवर्णयादाग्निवारुणमेकादशकपालमनु निर्वपेद्यं चैव हन्ति यश्चास्यर्णयात्तौ भागधेयेन प्रीणाति नाऽऽर्तिमार्च्छति यजमानः (५) ॥

(आऽपराभावाय पुरोडाशमेते आहुती सप्त पदानि च ।)

सम्भार इति सम्भृत-सम्भार । इति । आहु । न । सम्भृत्या इति सं-भृत्या । सम्भारा इति सं-भारा । न । यजु । कर्तव्यम् । इति । अथो इति । खलु । सम्भृत्या इति सं-भृत्या । एव । सम्भारा इति सम्भारा । कर्तव्यम् । यजु । यज्ञस्य । समृद्ध्या इति सम्-ऋद्ध्यै । पुनर्निष्कृत इति पुन -निष्कृत । रथ । दक्षिणा । पुनरुत्स्यूतमिति पुन -उत्स्यूतम् । वास । पुनरुत्सृष्ट इति पुन -उत्सृष्ट । अनड्वान् । पुनराधेयस्येति पुन -आधेयस्य । समृद्ध्या इति सम्-ऋद्ध्यै । सप्त । ते । अग्ने । समिध इति सम्-इध । सप्त । जिह्वा । इति । अग्निहोत्रमित्यग्नि-होत्रम् । जुहोति । यत्रयत्रेति यत्र-यत्र । एव । अस्य । न्यक्तमिति नि-अक्तम् । तत । (४) एव । एनम् । अवेति । रुन्धे । वीरहेति वीर-हा । वै । एष । देवानाम् । य । अग्निम् । उद्वासयत इत्युत्-वासयते । तस्य । वरुण । एव । ऋणयादित्यृण-यात् । आग्निवारुणमित्याग्नि-वारुणम् । एकादशकपालमित्येकादश-कपालम् । अनु । निरिति । वपेत् । यम् । च । एव । हन्ति । य । च । अस्य । ऋणयादित्यृण-यात् । तौ । भागधेयेनेति भाग-धेयेन । प्रीणाति । न । आर्तिम् । एति । ऋच्छति । यजमान (५) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाक ॥ २ ॥

(यजुरिति-) यजु शब्देन सर्पराज्ञीप्रभृतय आधानमन्त्रा विवक्षिता । सम्भारशब्देन सिकतोपादिसम्भृदिशेषा विवक्षिता । प्रथमाधाने यजुषामुच्चारितत्वात्सम्भाराणां च सम्पादितत्वादस्यापि कर्मविशेषस्याऽऽधानावस्थान्तभेदाभावेन यजु सम्भारो सिद्धत्वादुभय पुन न कर्तव्यम् इति पूर्व पक्ष । प्रथमाधाने वाजसनेयिमत सूत्रकार उदाजहार—"सप्त पार्थिवान्सम्भारानाहरत्येव वानस्पत्यान्पञ्च वा भूयसो वा पार्थिवान्सम्भारान्सम्भरेदिति वाजसनेयकम्" इति ॥

(२२) सिद्धान्तमाह—(अथो खल्विति-) अथोशब्द पूर्वपक्षव्यावृत्त्यर्थ । अत्र सूत्रकार पक्षद्वयमुदाजहार—"नैतस्मिन्सम्भारा यजूंषि च भवन्त्यपि वा पञ्च पार्थिवान्सम्भारानाहरत्येव वानस्पत्यान्" इति ॥

(२३) दक्षिणा विधत्ते—(पुनरिति-) भग्न सन्दधाकृत पुनर्निष्कृतः । छिन्न सत्सूचीतन्तुभ्या स्यूत पुनरुत्स्यूतम् । दौर्बल्येन भार वोढुमशक्तस्तथा परित्यज्य सन्कअचितपोषणेन शक्तीकृत पुनरुत्सृष्टः ॥

(२४) तूष्णीमेव होतव्यमिति प्रथमाधानस्यामन्त्रत्वेन यदग्निहोत्र विहित तदत्र चोदकप्राप्त तदपोद्य समन्त्रक विधत्ते—(सप्त त इति-) मन्त्रस्त्वपरिज्ञाधाल्यास्यते । अस्य पुनराधेयदेवस्याग्नेर्यद्रत्न यस्मिन्यस्मिन्प्रदेशे न्यक्त निमग्न विगूढ तत तत एव प्रदेशाद्यद्दयम् एनम् अग्नि सम्पादयति ॥

(२५) अनुनिर्वाप्य हविर्विधत्ते—(वीरहेति-) अग्निमेव घातयति पीडयति ऋणपात् । तौ यष्टाग्नीवरुणौ तोषयति ॥

१ आप श्रौ सू ५ १ ४-५-६ । २ आप. श्रौ. सू. ५ २७ ७-८. । ३ तै ब्रा १ १. ६. ।

(अथ प्रथमाष्टके पञ्चमप्रपाठके तृतीयोऽनुवाकः ।)

*भूमिर्भूम्ना द्यौर्वरिणाऽन्तरिक्षं महित्वा । उपस्थे ते देव्यदितेऽग्निमन्नादमन्नाद्यायाऽऽदधे । आऽयं गौः पृश्निरक्रमीदसनन्मातरं पुनः । पितरं च प्रयन्त्सुवः । [1]त्रिंशद्धाम वि राजति वाक्पतङ्गाय शिश्रिये । प्रत्यस्य वह द्युभिः ।

भूमिः । भूम्ना । द्यौः । वरिणा । अन्तरिक्षम् । महित्वेति महि-त्वा । उपस्थ इत्युप-स्थे । ते । देवि । अदिते । अग्निम् । अन्नादमित्यन्न-अदम् । अन्नाद्यायेत्यन्न-अद्याय । एति । दधे । एति । अयम् । गौः । पृश्निः । अक्रमीत् । असनत् । मातरम् । पुनरिति । पितरम् । च । प्रयन्निति प्र-यन् । सुवः । त्रिंशत् । धाम । वीति । राजति । वाक् । पतङ्गाय । शिश्रिये । प्रतीति । अस्य । वह । द्युभिरिति द्यु-भिः । अस्य ।

अथ मीमांसा । दशमाध्यायस्य तृतीयपादे चिन्तितम्—"[1]पुनराधौ समुच्चेयः पुनर्निष्कृत इत्यदः । बाधको वा समुच्चेयमुभयोरिष्टुदीरणात् ॥ आधानदक्षिणोपेतमुभयोरित्यनूद्यते । ददातीत्यविधानात्कार्यैक्याद्बाधकं भवेत्" इति ॥ आधाने विनिश्चिता गोऽश्वादिदक्षिणा द्रव्यान्तरदक्षिणाश्च बह्व्यः श्रूयन्ते—"[2]एका देया षड् देया द्वादश देया" इत्यादिना । पुनराधाने पुनर्निष्कृतो रथो दक्षिणा इत्यादि श्रुतम् । तत्र सन्देहः किं पुनर्निष्कृतः । सैव पुनर्निष्कृतादिदक्षिणा किमतिदिष्टैकादिसंख्यया दक्षिणया समुच्चीयत उत सा बाधत इति संशयः । उभयोर्दक्षिणा ददातीत्यनौपदेशिकी पौनराधेयिकी भवत्युक्तत्वात्समुच्चय इति पूर्वः पक्षः । ददातीति वर्तमाननिर्देशस्य विधित्वाभावादाधानकाले पूर्वं दत्तं पुनराधानकाले दीयमानं च मिलित्वोभयोरित्यनूद्यते । दक्षिणारूपस्य कार्यस्यैकत्वादुपदिष्टमतिदिष्टस्य बाधकम् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके द्वितीयोऽनुवाकः ॥ २ ॥

(२६) प्रथमद्वितीययोः पुनराधेयस्य प्रधानविधिस्तदङ्गानि च निरूपितानि । तृतीये त्वाधानमन्त्रा आम्नायन्ते । कल्पः—"[8]भूमिर्भूम्नेति सर्पराज्ञीभिर्गार्हपत्यमादधाति यत्त्वा क्रुद्ध परोवपेति दक्षिणाग्निं यत्ते मन्युपरोप्तस्येतीतरान्" इति । आहवनीयसभ्यावसथ्यानित्यर्थः । त एते षण्मन्त्राः ॥ तत्र प्रथम एव पठ्यते—(भूमिरिति–) हे गार्हपत्यप्रदेश ! त्वं लोकत्रयात्मकोऽसि । तत्र भूम्ना बाहुल्येन भूमिः असि । वरिणा वरिष्ठत्वेन द्यौः असि । महित्वा महत्त्वेन अन्तरिक्षम् असि । हे अदिते भूमे तत्प्रदेशरूपे देवि ! तवोपस्थे [अन्नादम्] अन्नभोक्तारं गार्हपत्यमग्निं यजमानस्यान्नाद्यायान्नसिद्ध्यर्थम् आदधे ॥

(२७) अथ द्वितीयः—(आयमिति–) अयं गार्हपत्य आदित्यरूपेण गौः गमनशीलः पृश्निः श्वेतवर्णो जगत् आक्रमीत् । आक्रमणप्रकार एव स्पष्टीक्रियते—पुनर्मातरं पृथिवीम् असनत् आसीदत्प्रापोदित्यर्थः । सुवः स्वर्गरूपं पितरं च प्रयन् प्रकर्षेण गच्छन्नवस्थित । द्यौः पिता पृथिवी मातेति श्रुत्यन्तरात्तयोर्माता-पितृत्वम् ॥

(२८) अथ तृतीयः—(त्रिंशदिति–) आदित्यरूपस्य गार्हपत्यस्य सम्बन्धि त्रिंशत्संख्याकं धाम मुहूर्तरूपं तेजः विशेषेण राजते । अहः पञ्चदश मुहूर्ता रात्रिः पञ्चदश । किंच वैदिकस्तुतिरूपा वाक्पतङ्गाय पक्षिवदाकाशसञ्चारिणमादित्यं शिश्रिये आश्रितवतीत्यर्थः । अत एवाम्नायते—"[9]अग्निं पूर्वाह्णे दिवि देव ईयते" इत्यादि । हे सादगार्हपत्य ! त्वां प्रति यदस्माभिरदासनरूपं प्रतिकूलमाचरितं तत्सर्वम् अस्य प्रति-शिप मनसि मा कृथाः । द्युभिः ज्वालारूपाभिः वह अस्मदीयं हविर्देवेषु प्रापय ॥

*भूमिर्भूम्नेत्यादिचत्वारो मन्त्रा आधानेऽपि विनियुक्ताः ।

१ जै. न्या. मा. १०. ३. ५ । २ आप. श्रौ. सू. ५. २०. १३ । ३ पुनराधेये तु पु° इति पाठः ।
४ 'दक्षिणा' इति क्वचिन्नास्ति । ५ 'संख्यया' इति क्वचिन्नास्ति । ६ 'उभयोर्ददाति' इति पाठः ।
७ 'ददात्यवेधिकी' इति पाठः । ८ आप. श्रौ. सू. ५. २८. १–१०. । ९ सं. ब्रा. ३. १२. १ ।

पृणस्वा घृतेन । पुनरूर्जा नि वर्तस्व पुनरग्न इषाऽऽयुषा । पुनर्नः पाहि विश्वतः । सह रय्या नि वर्तस्वाग्ने पिन्वस्व धारया । विश्वप्स्निया विश्वतस्परि । लेकः सलेकः सुलेकस्ते न आदित्या आज्यं जुषाणा वियन्तु केतः सकेतः सुकेतस्ते न आदित्या आज्यं जुषाणा वियन्तु विवस्वाँ अदितिर्देवजूतिस्ते न आदित्या आज्यं जुषाणा वियन्तु ( ३ ) ॥

(त्वा जिह्वाः सप्त सुकेतस्ते नवचत्वारिंशच्च ।)

होत्राः । सप्तधेति सप्त-धा । त्वा । यजन्ति । सप्त । योनीः । एति । पृणस्व । घृतेन । पुनः । ऊर्जा । नीति । वर्तस्व । पुनः । अग्ने । इषा । आयुषा । पुनः । नः । पाहि । विश्वतः । सह । रय्या । नीति । वर्तस्व । अग्ने । पिन्वस्व । धारया । विश्वप्स्नियेति विश्व-प्स्निया । विश्वतः । परि । लेकः । सलेक इति स-लेकः । सुलेक इति सु-लेकः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु । केतः । सकेत इति स-केतः । सुकेत इति सु-केतः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु । विवस्वान् । अदितिः । देवजूतिरिति देव-जूतिः । ते । नः । आदित्याः । आज्यम् । जुषाणाः । वियन्तु (३) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

त्वां यजमानाः सप्तधा यजन्ति । अग्निष्टोमोऽत्यग्निष्टोम उक्थ्यः षोडश्यतिरात्रोऽप्तोर्यामो वाजपेयश्चेति सप्त प्रकाराः । तादृशस्त्वं सप्त योनीः आहवनीयादिस्थानानि घृतेन सर्वतः पूरय ॥

(३४) कल्पः—"पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति पुनरूर्जेति वा पुरस्तात्प्रयाजानां सह रय्येत्युपरिष्टादनूयाजानाम्" इति । प्रथममन्त्रपाठस्तु—(पुनरूर्जेति-) हे अग्ने ! त्वं मयोद्वासितोऽपि ऊर्जा क्षीरादिरसेन सह पुनर्निवर्तस्व अभ्यागच्छ । इषा अन्नेन आयुषा च सह पुनरागच्छ । [नः] अस्मान् पुनः पुनः कृतात् विश्वतः सर्वस्मादपराधात् पाहि ॥

(३५) द्वितीयमन्त्रपाठस्तु—[सहेति] हे अग्ने ! रय्या धनेन सह निवर्तस्व [विश्वप्स्निया ] 'प्सा भक्षणे' इति धातुः । विश्वेन प्सायते भक्ष्यते पीयत इति विश्वप्स्नी तादृश्या वृष्टिधारया विश्वतस्परि सर्वेषां तृणधान्यलतापादपानामुपरि पिन्वस्व सिञ्च ॥

(३६) कल्पः—"यस्तृतीयमादधीत स एतान्होमाञ्जुहुयाल्लेकः सलेक इति । मन्त्रत्रयपाठस्तु—( लेक इति-) नवसंख्याका लेकादिनामका ये आदित्यास्ते सर्वे जुषाणाः प्रीयमाणा [नः] अस्माकम् आज्यं वियन्तु पिबन्तु ॥

अत्र विनियोगसंग्रहः—"चतुर्भिर्भूमिरित्याद्यैराद्धात्यश्विमानलम् । दक्षिणाग्निं तु यत्त्वेति यदित्याहवनीयकम् ॥ १ ॥ मनस्तूपस्थितिः सप्त जुहुयादग्निहोत्रकम् । पुनर्द्वाभ्यां पुरोडाशमभितो जुहुयादथ ॥ २ ॥ तृतीयमादधानस्य लेकाद्या होममन्त्रकाः ॥" इति ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके तृतीयोऽनुवाकः ॥ ३ ॥

१ आप. ५. २८. १६-१७. । २ अदा. प. अ. । ३ आप. श्रौ. सू. ५. २६. ११. ।

अथ प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ।

[३७]भूमिर्भूम्ना द्यौर्वरिणेत्याहाऽऽशिषैवैनमाधत्ते [३८]सर्पा वै जीर्यन्तोऽमन्यन्त स एतं कसर्णीरः काद्रवेयो मन्त्रमपश्यत्ततो वै ते जीर्णास्तनूरपाघ्नत सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधाति पुनर्नवमेवैनमजरं कृत्वाऽऽधत्तेऽथो पूतमेव [३९]पृथिवीमन्नाद्यं नोपानमत्सैतम् (१) मन्त्रमपश्यत्ततो वै तामन्नाद्यमुपानमद्यत्सर्पराज्ञिया ऋग्भिर्गार्हपत्यमादधात्यन्नाद्यस्यावरुद्ध्या अथो अस्यामेवैनं प्रतिष्ठितमाधत्ते [४०]यत्त्वा क्रुद्धः परोवपेत्याहापह्नुत एवास्मै [४१]तत्पुनस्त्वोद्दीपयामसीत्याह समिन्ध एवैनं [४२]यत्ते मन्युपरोप्तस्येत्याह देवताभिरेव (२) एनꣳ सं भरति [४३]वि वा एतस्य यज्ञश्छिद्यते योऽग्निमुद्वासयते बृहस्पतिवत्यर्चोप तिष्ठते ब्रह्म वै

भूमिः । भूम्ना । द्यौः । वरिणा । इति । आह । आशिषेत्या-शिषा । एव । एनम् । एति । धत्ते । सर्पाः । वै । जीर्यन्तः । अमन्यन्त । सः । एतम् । कसर्णीरः । काद्रवेयः । मन्त्रम् । अपश्यत् । ततः । वै । ते । जीर्णाः । तनूः । अपेति । अघ्नत । सर्पराज्ञिया इति सर्प-राज्ञियाः । ऋग्भिरित्यृक्-भिः । गार्हपत्यमिति गार्ह-पत्यम् । एति । दधाति । पुनर्नवमिति पुनः-नवम् । एव । एनम् । अजरम् । कृत्वा । एति । धत्ते । अथो इति । पूतम् । एव । पृथिवीम् । अन्नाद्यमित्यन्न-अद्यम् । न । उपेति । अनमत् । सा । एतम् । (१) मन्त्रम् । अपश्यत् । ततः । वै । ताम् । अन्नाद्यमित्यन्न-अद्यम् । उपेति । अनमत् । यत् । सर्पराज्ञिया इति सर्प-राज्ञियाः । ऋग्भिरित्यृक्-भिः । गार्हपत्यमिति गार्ह-पत्यम् । आदधातीत्या-दधाति । अन्नाद्यस्येत्यन्न-अद्यस्य । अवरुद्ध्या इत्यव-रुद्ध्यै । अथो इति । अस्याम् । एव । एनम् । प्रतिष्ठितमिति प्रति-स्थितम् । एति । धत्ते । यत् । त्वा । क्रुद्धः । परोवपेति परा-उवप । इति । आह । अपेति । ह्नुते । एव । अस्मै । तत् । पुनः । त्वा । उदिति । दीपयामसि । इति । आह । समिति । इन्धे । एव । एनम् । यत् । ते । मन्युपरोप्तस्येति मन्यु-परोप्तस्य । इति । आह । देवताभिः । एव । (२) एनम् । समिति । भरति । वीति । वै । एतस्य । यज्ञः । छिद्यते । यः । अग्निम् । उद्वासयत इत्युत्-वासयते । बृहस्पतिवत्येति बृह-

(३७) चतुर्थानुवाके पूर्वोक्ता मन्त्रा व्याख्यायन्ते । तत्र अभ्याधाय इत्येतस्य मन्त्रपदस्याभिप्रायमाह—(भूमिरिति-) आशिषा अर्थं प्राप्तुमिच्छया ॥

(३८) पवमानग्निराधानं विधत्ते—(सर्पा इति-) जीर्यन्तो जरां प्राप्नुवन्तः अमन्यन्त कोऽस्या जरायाः प्रतीकार इति विचारितवन्तः । तदा कसर्णीरनामकः (काद्रवेयः-) कद्रूपुत्रो भूमिरित्यादिकं मन्त्रत्रयम् अपश्यत् । तन्मन्त्रसामर्थ्यात् ते सर्पा जीर्णाः शरीरत्वचोऽपहत्य कोमलास्त्वचः प्राप्नुवन् । सर्पाणां राज्ञी भूमिः । इयं वै सर्पाणां राज्ञीत्यन्यत्राऽऽम्नानात् । तस्या ऋचो भूमिर्भूम्नेत्याद्यास्ताभिराहितोऽग्निर्जरां परित्यज्य नूतनः पूतश्च भवति ॥

(३९) तमेव विधिमनूद्य प्रशंसति—(पृथिवीमिति-) अन्नाद्याय इत्युपक्रमात् प्राप्तिः । उपरये ते देवीत्युपक्रम्य प्रतिष्ठितम् ॥

(४०) यदाह (इदं) परोक्ष सत्युक्त्वाभि युधिष्ठिरस्येवाग्नेः शान्त्यर्थमपलापं इत्याह—(यत्त्वेति-) ॥

(४१) उद्दीपनमग्नीत्यभिप्रायमाह—(पुनस्त्वेति-) ॥

(४२) आदित्या इति तदित्यादेरभिप्रायमाह—(यत्त इति-) ॥

(४३) उपस्थानं विधत्ते—(विवेति-) बृहस्पतिशब्दोऽस्यामस्तीति बृहस्पतिवती ॥

देवानां बृहस्पतिर्ब्रह्मणैव यज्ञꣳ सं दधाति विच्छिन्नं यज्ञꣳ समिमं दधात्वि-
त्याह संतत्यै विश्वे देवा इह मादयन्तामित्याह संतत्यैव यज्ञं देवेभ्योऽनु दि-
शति सप्त ते अग्ने समिधः सप्त जिह्वाः ( ३ ) इत्याह सप्तसप्त वै सप्तधाऽग्नेः
प्रियास्तनुवस्ता एवाव रुन्द्धे पुनरूर्जा सह रय्येत्यभितः पुरोडाशमाहुती जुहोति
यजमानमेवोर्जा च रय्या चोभयतः परि गृह्णात्यादित्या वा अस्माल्लोकादमुं
लोकमायन्तेऽमुष्मिँल्लोके व्यतृष्यन्त इमं लोकं पुनरभ्यवेत्याग्निमाधायैतान्हो-
मानजुहवुस्त आर्ध्नुवन्ते सुवर्गं लोकमायन्यः पराचीनं पुनराधेयादग्निमादधीत
स एतान्होमाञ्जुहुयाद्यामेवाऽऽदित्या ऋद्धिमार्ध्नुवन्तामेवर्ध्नोति ( ४ ) ॥

(सैतं देवताभिरेव जिह्वा एतान्पञ्चविंशतिश्च ।)

स्पर्ति-पुत्र । कृत्वा । उपेति । तिष्ठते । यत् । वै । देवानाम् । बृहस्पतिः । ब्रह्मणा । एव । यज्ञम् । सम् । इति । दधाति । विच्छिन्नमिति वि-छिन्नम् । यज्ञम् । समिति । इमम् । दधातु । इति । आह । संतत्या इति सं-तत्यै । विश्वे । देवाः । इह । मादयन्ताम् । इति । आह । संतत्येति सं-तत्या । एव । यज्ञम् । देवेभ्यः । अन्विति । दिशति । सप्त । ते । अग्ने । समिध इति सम्-इधः । सप्त । जिह्वाः । (३) इति । आह । सप्तसप्तेति सप्त-सप्त । वै । सप्तधेति सप्त-धा । अग्नेः । प्रियाः । तनुवः । ताः । एव । अवेति । रुन्द्धे । पुनः । ऊर्जा । सह । रय्या । इति । अभितः । पुरोडाशम् । आहुती इत्या-हुती । जुहोति । यजमानम् । एव । ऊर्जा । च । रय्या । च । उभयतः । परीति । गृह्णाति । आदित्याः । वै । अस्मात् । लोकात् । अमुम् । लोकम् । आयन् । ते । अमुष्मिन् । लोके । वीति । अतृष्यन् । ते । इमम् । लोकम् । पुनः । अभ्यवेत्येत्यभि-अवेत्य । अग्निम् । आधायेत्या-धाय । एतान् । होमान् । अजुहवुः । ते । आर्ध्नु-वन् । ते । सुवर्गमिति सुवः-गम् । लोकम् । आयन् । यः । पराचीनम् । पुनराधेयादिति पुनः-आधे-यात् । अग्निम् । आदधीतेत्या-दधीत । सः । एतान् । होमान् । जुहुयात् । याम् । एव । आदित्याः । ऋद्धिम् । आर्ध्नुवन् । ताम् । एव । ऋध्नोति (४) ॥

इति कृष्णयजुर्वेदीयतैत्तिरीयसंहितापदपाठे प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

(४४) सं शब्दं प्रयस्य संदधातीत्यादि शब्दस्याभिप्रायमाह—(विच्छिन्नमिति-) ॥

(४५) देवसंबोधनस्योपयोगमाह—(विश्वेदेवा इति-)यज्ञं सततं कृत्वा देवेभ्यः समर्पणाय संबोधनम् ॥

(४६) समिदादिषु सप्तसंख्याया उपयोगमाह—(सप्त त इति-) समिदादयः सर्वे पदार्थाः प्रत्येकं सप्त सप्त विनिर्दिश्यन्ते । यस्मात् सप्तधा अवस्थिताः पदार्था अग्नेः प्रियास्तनुवः तस्मात्तदवरोधाय सप्तसंख्या ॥

(४७) द्वितीयानुवाके विहितयोराहुत्योर्मन्त्रौ विनियुङ्क्ते—(पुनरूर्जेति-) ॥

(४८) तृतीयाध्याने होमान्विधत्ते—(आदित्या वाइति-) आदित्याः आधानपुनराधाने अनुष्ठाय सुवर्गं गत्वा तत्र व्यतृष्यन्त विशेषेण तृषां प्राप्ताः । समृद्धिर्न पर्याप्तेति मत्वा भूलोकमागत्य लेकादिमन्त्रैर्हुत्वाऽतिशयेन समृद्धिं गताः । ततः पुनराधेयात् ऊर्ध्वम् अग्निम् आधाय लेकादिभिः जुहुयात् ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयसंहिताभाष्ये प्रथमकाण्डे पञ्चमप्रपाठके चतुर्थोऽनुवाकः ॥ ४ ॥

( २ ) अनाग्नेयं वा एतत्क्रियते । यत्समिधस्तनूनपातमिडो बर्हिर्यजति । [51]उभावाग्नेयावाज्यभागौ स्याताम् । [52]अनाज्यभागौ भवत इत्याहुः । यदुभावाग्नेयावन्वञ्चावियिति । अग्नये पवमानायोत्तरः स्यात् । यत्पवमानाय । तेनाऽऽज्यभागः । तेन सौम्यः । [53]बुधन्वत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति । ( ३ ) यथा सुप्तं बोधयति । तादृगेव तत् । [54]अग्निन्यक्ताः पत्नीसंयाजानामृचः स्युः । तेनाऽऽग्नेयं सर्वं भवति । [55]एकधा तेजस्विनी देवतामुपैतीत्याहुः । सैनमीश्वरा प्रदह इति । [56]नेति ब्रूयात् । प्रजननं वा अग्निः । प्रजननमेवोपैतीति । [57]कृतयजुः संभृतसंभार इत्याहुः । ( ४ ) न संभृत्याः संभाराः । न यजुः

( ५१ ) इदानीमाज्यभागयोर्विशेषं विधत्ते—(उभाविति-) प्रकृतावाद्य आज्यभाग आग्नेयः द्वितीयः सौम्यः । अत्र तु द्वितीयोऽप्याग्नेयः कर्तव्यः ॥

(५२) अत्रैवापरं विशेषं विधत्ते—(अनाज्यभागाविति-) अत्र केचिदभिज्ञा एवमाक्षिपन्ति । यदि उभौ अप्याज्यभागौ अन्वञ्चौ अव्यवहितौ आग्नेयौ एव कुर्यात्तदानीमेतावाज्यभागावेव न भवतः । सौम्यस्यानुष्ठितत्वात् । सौम्यो हि सोपपत्तिकः प्रकृतावेव विहितः —"देवलोकं वा अग्निना यजमानोऽनुपश्यति पितृलोकं[4] सोमेनोत्तरार्धेऽग्नये जुहोति दक्षिणार्धे सोमाय" इति तस्मादुत्तरः सौम्यः कर्तव्य इति । अभिज्ञपक्षेऽभिज्ञस्येदमुत्तरम् । अनाग्नेयत्वमसौम्यत्वं चेति दोषद्वयं वारयितुं पवमानायाग्नये उत्तरः आज्यभागः कर्तव्यः । तत्राग्निः प्रत्यक्षमेव श्रूयते । पवमानविशेषणेन तु केवलाग्नेयत्वदोषवारणादाज्यभागत्वं सिध्यति । तावता सौम्यत्वमुपचरणीयम् । "सोम आयूंषि पवसे" इत्यस्याः पुरोनुवाक्यायाः कृतत्वात्सार्थे पवमानायाग्नय उत्तर आज्यभागः स्यादिति तात्पर्यार्थः ॥

( ५३ ) प्रथमस्याऽऽज्यभागस्य प्राकृती पुरोनुवाक्यां बाधितुमन्यां विधत्ते—(बुधन्वतीति-) बुधिधातुर्यस्यामृच्यस्ति सेयं बुधन्वती तस्याः क्रियमाणायां यथा लोके सुप्तं पुरुषं बोधयति तादृगेव तत् भवति । अत्र सूत्रम्—"अग्निं[4] सोमेन बोधयेत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवताम आयूंषि पवस इति सौम्यस्य" इति ॥

( ५४ ) पत्नीसंयाजमन्त्रेषु विशेषं विधत्ते—(अग्निन्यक्ता इति-) अग्निपदेन युक्ता अग्निन्यक्ताः "आप्यायस्व समेतु ते विश्वतः सोम वृष्णियम्" इत्येषा प्रथमस्य पत्नीसंयाजस्य पुरोनुवाक्या । तत्र सोमाभि वृष्णियमित्यग्निपदप्रक्षेपोऽभियुक्तत्वम् । यथा समिदादिप्रयाजेष्वग्निशब्दगतविभक्तिप्रयोगेणाऽऽग्नेयत्वमेव पत्नीसंयाजानाम् अप्याग्नेयत्वं संपद्यते ॥

( ५५ ) अत्र चोद्यवादिनामाक्षेपं दर्शयति—(एकधेति-) तेजोधिका देवतां यः पुमान् एकधोपैति नैरन्तर्येण सेवते सा देवता तम् एनं प्रदग्धुं समर्था भवति । तस्मात्पूर्वोक्तमग्निन्यक्तत्वं न कार्यमित्याक्षेपः ।

( ५६ ) तस्योत्तरं दर्शयति—(नेतीति-) न अस्ति प्रदाह इति एवमुत्तरं ब्रूयात् अग्नेर्विरोधिदाहकत्वेऽपि स्वकीयसेवकं प्रति प्रजननेनानुग्राहकत्वान्निरन्तरमग्निं सेवमानः प्रजोत्पत्तिम् एव प्राप्नोति इति ॥

( ५७ ) अत्र चोद्यरूपाणां संभाराधानमन्त्राणां पूर्वपक्षरूपेण निराचष्टे—(कृतयजुरिति-) यजुःशब्देन यैर्मन्त्रैः शिरः दत्वाया आधानमन्त्रा विवक्षिताः । संभारशब्देन सिकतादिसप्त मृद्विशेषा अश्वत्थोदुम्बरादिसप्त वानस्पत्यविशेषाश्च विवक्षिताः । प्रथमाधाने यजुषामुच्चरितत्वात्संभाराणां च संपादितत्वादस्यापि पुनराधेयस्याऽऽधानादत्यन्तभेदाभावेन यजुःसंभारौ सिद्धावात्तदुभयं पुनः न कर्तव्यम् इति पूर्वः पक्षः ॥

१ तै सं २ ६ २.।　　२ तै सं १.३ १४ ।　　३ आप. श्रौ सू. ५.२८ १०.।
४ तै. सं. ४. २. ७. ।　　५ तै ब्रा. १. १. ७. ।

कार्यमिति । [५८]अथो खलु । संभृत्या एव संभाराः । कार्यं यजुः । पुनराधेयस्य समृद्ध्यै । [५९]तेनोपांशु प्रचरति । एष्य इव वा एषः । यत्पुनराधेयः । यथोपांशु नष्टमिच्छति । ( ५ ) तादृगेव तत् । [६०]उच्चैः स्विष्टकृतमुत्सृजति । यथा नष्टं विच्वा प्राह्वायमिति । तादृगेव तत् । [६१]एकधा तेजस्विनीं देवतामुपैतीत्याहुः । सैनमीश्वरा प्रदह इति । तत्तथा नोपैति । प्रयाजानूयाजेष्वेव विभक्तीः कुर्यात् । यथापूर्वमाज्यभागौ स्याताम् । एवं पत्नीसंयाजाः । ( ६ ) तद्द्वैधा नर्वत्प्रजननवत्तरमुपैतीति । [६२]तदाहुः । व्यृद्धं वा एतत् । अनाग्नेयं वा एतत्क्रि-

( ५८ ) सिद्धान्तमाह—(अथो इति-) अथो-शब्देन पूर्वपक्षो निवर्त्यते । यद्यप्ययमर्थः संहितायामुक्तस्तथाऽप्यस्यानुवाकस्य तद्धेतुत्वद्योतनाय पुनरनुवादः ॥

( ५९ ) अन्यं विशेषं विधत्ते—(तेनोपांश्विति-) तेन पुनराधेयेनाल्पशब्दं यथा भवति तथाऽनुतिष्ठेत् । तत्रार्थं हेतुः—योऽयं पुनराधेयः स एव पुनरन्वेषणीय इव भवति । आधानेन संपादितस्याग्नेरुद्वासनेन विनाशे सति पुनः संपादनाय प्रवृत्तत्वात् । अत एव पुनराधेयविधिरेवमाम्नातः—"उद्वास्य पुनरादधीत" इति । अनान्वेषणे दृष्टान्तः । यथा लोके स्वगृहे चौरैरपहृतं नष्टं वस्तु चौरगृहेऽन्विच्छन्पुरुषो हस्तपादादिशब्दो यथा नोत्तिष्ठति तथैवान्विच्छति तादृगेव तत् द्रष्टव्यम् ॥

( ६० ) विशेषान्तरं विधत्ते—(उच्चैरिति-) स्विष्टकृद्विषयं मन्त्रं उच्चैः उच्चारयेत् । यथा लोके नष्टं वस्तु प्रच्छन्नमेवेषणान्विष्य कथंचिल्लब्ध्वा सर्वेषामग्रे मदीयोऽयं पदार्थ इत्येवं प्रकाशयति तद्वत् एतत् । तदेतत्सूत्रकार आह—"सामिधेनीप्रभृत्युपांशु यजत्योत्तमादनूयाजादुच्चैः स्विष्टकृतम्" इति ॥

( ६१ ) ये पूर्वपक्षवादिनः सर्वाग्नेयत्वसिद्धान्तपक्षं दूषयन्तः स्वमतं पूर्वपक्षत्वेनोपन्यस्य परैर्निराकृतास्त एव वादिनः पुनरपि स्वकीयं मतं स्थापयन्तः सर्वाग्नेयत्वपक्षं दूषयन्ति तेषां मतमाह—(एकधेति-) अग्नेरतितेजस्त्वात्सर्वमाग्नेयं यत्नेन प्रदाहायैव स्यात् । तत् पुनराधेयं तथा नोपैति । सर्वमाग्नेयं न कुर्यात् । किं तु प्रयाजानूयाजेष्वेव अग्निविषया विभक्तीः कुर्यात् । तत्र प्रयाजविभक्तय आपस्तम्बोक्ताः पूर्वं दर्शिताः । अनूयाजविभक्तिद्वयं त्वाश्वलायनेनोक्तम्—"देवं बर्हिरग्ने वसुवने वसुधेयस्य वेतु देवो नराशंसोऽग्नौ वसुवने वसुधेयस्य वेतु" इति । एवमुभयत्राग्निविभक्तीः कृत्वा यौ आज्यभागौ ये च पत्नीसंयाजाः ते सर्वे प्रकृतिवदेवानुष्ठेया न त्वाग्नेयत्वाय तत्र प्रयतितव्यम् । एवं सति तत्पुनराधेयकर्माग्निविषयविभक्तिसद्भावात् वैश्वानरपक्षं अग्निगुणवत् एकाग्नित्वेन प्रजननवत्तरं भवतीत्येवं स्वमतदार्ढ्यं संपादितम् ॥

( ६२ ) अत्र सर्वाग्नेयत्ववादिनो चोद्यमुद्भावयन्ति—(तदाहुरिति-) द्वितीयाज्यभागस्याऽऽग्नेयत्वं पत्नीसंयाजानां चाग्नेयत्वं यदि न क्रियते तदानीम् एतत् पुनराधेयम् अनाग्नेयं स्यात् ॥

१ तै. ब्रा. १. ५. २. । २ तै. सं. १. ५. १. । ३ आप. श्रौ. सू. ५. २८. ५. । ४ आप. श्रौ. सू. ५. २८. ६. । ५ आश्व. श्रौ. सू. २-८. ।

यत इति । [६३]नेति ब्रूयात् । अग्निं प्रथमं विभक्तीनां यजति । अग्निमुत्तमं पत्नीसंयाजानाम् । तेनाऽऽग्नेयम् । तेन समृद्धं क्रियत इति । (७)

अलभ्यैतेन वर्तयति संभृत्यसंभार इत्याहुरिच्छन्ति पत्नीसंयाजा नव च ॥

---

(६३) एतच्च समृद्धिहीनमिति वादिनां चोद्यं तस्योत्तरमाह—(नेतीति—) एतत्पुनराधेयमस्मदुक्तप्रकारेणाऽऽज्यभागयोः पत्नीसंयाजानां च यथापूर्वत्वेऽपि समृद्धिहीनं न भवति इति उत्तरं ब्रूयात् । कथमिति तदुच्यते । प्रथमं यागादौ प्रयाजगतविभक्तीनां संबन्धित्वादग्निर्यष्टव्यः । अवसाने च पत्नीसंयाजेषु उत्तममग्निं यजेत् । तत्र च—"अग्निर्होता गृहपतिः" इत्याग्नेयो मन्त्र आम्नातः । अत आद्यन्तयोराग्नेयत्वेन तन्मध्यपतितं सर्वम् आग्नेयं संपद्यते । तेन पुनराधेयं समृद्धं कुरुते ॥

अथ मीमांसा—दशमाध्यायस्य चतुर्थपादे चिन्तितम्—"बुधन्वत्त्वादिगुणको देवो वाच्योऽथ केवलः । आद्यो देवगुणत्वेन नैवं मन्त्रगुणत्वतः ।" आधाने पवमानेष्टिष्वाज्यभागौ प्रकृत्य श्रूयते—"बुधन्वानाग्नेयः कार्यः पावकवान्सौम्यः" इति । तथा पुनराधेयेऽपि श्रूयते—"बुधन्वत्याग्नेयस्याऽऽज्यभागस्य पुरोनुवाक्या भवति" इति । अत्र निगमेषु "बुधन्वन्तमग्निमावह पावकवन्तं सोममावह" इत्येवं सगुणो देवो वक्तव्यः । कुतः । बुधन्वत्त्वादेर्देवगुणत्वात् । तथा हि । बुधशब्दोऽस्यास्तीति बुधन्वान् । न खल्वाज्यभागस्य देवताद्वारेण विना साक्षाद्बुधशब्दवत्त्वं संभवति । तस्माद्देवगुणत्वात्सगुणो देवो वक्तव्यः । नैवम् । बुधन्वत्त्वादेर्मन्त्रगुणत्वात् । न ह्यत्राऽऽग्नेयशब्दो यागपरः । किं तु मन्त्रपरः । संभवति हि मन्त्रस्य साक्षादेव बुधशब्दप्रयोगः । "अग्निं स्तोमेन बोधय" इत्यस्मिन्मन्त्रे बुधिर्धातोः प्रयुक्तत्वात् । बुधन्वत्ताविधिना चाग्नेयं मन्त्रान्तरं निवर्त्यते । न च तद्धितान्त आग्नेयपद उपसर्जनीभूतो देवतावाचकोऽग्निशब्दो बुधन्वच्छब्देन विशेष्टुमर्हति । तस्मात्केवलोऽग्निशब्दो निगमे पठितव्यः ॥

इति श्रीमत्सायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे कृष्णयजुर्वेदीयतैत्तिरीयब्राह्मणभाष्ये प्रथमकाण्डे तृतीयप्रपाठके प्रथमोऽनुवाकः ॥ १ ॥

---

१ तै. आ. ३. ५. १३. । २ जै. न्या. मा. १०. ४. ७. । ३ तै. ब्रा. १. २. १. । ४ 'तथा···भवति' इति' अयं ग्रन्थः क्वचिन्नास्ति । ५ 'तत्र' इति पाठः । ६ 'बुधन्वन्तम्' इति पाठः । ७ बुधन्वत्तादेर्दे° इति पाठः । ८ 'श्रूयते-बुधन्वानाग्नेयः पावकवान्सौम्य इति' इति अधिकः पाठः । ९ 'बुधशब्दो······स्यात्' अयं ग्रन्थः क्वचिन्नास्ति । १० °क्षाद्बुधन्वच्छब्द° इति पाठः । ११ बुधन्वत्तादेर्मं° । १२ °क्षाद्बुधन्वच्छब्दम° इति पाठः । १३ तै. सं. ४. १. ११. । १४ बोधय इति° पाठः । १५ बुधिधा° पाठः । १६ बुधन्वत्ताविं° पाठः । १७ °जनीभू° पाठः । १८ °ब्दो बुधन्व° पाठः.



# पुनराधानमन्त्रसूची ।










# THE ADHĀNA SECTION

OF

# KṚṢṆA-YAJURVEDA

# THE ĀDHĀNA SECTION
## OF
# KṚṢṆA-YAJURVEDA

## TAITTIRĪYA BRĀHMAṆA
### KĀṆḌA I—PRAPĀṬHAKA I

1-3 1 1. 2 He should place Agni under (the constellation
of) Kṛttikā,[1] (for) Kṛttikā verily is the constellation of Agni
Having placed him in his own divinity he becomes endowed
with divine splendour (*brahmavarcasī*) Kṛttikā is verily the
mouth* (*mukham*) of the constellations He becomes prominent
(*mukhyah*) who places Agni under Kṛttikā Or else [1] they
do not render due respect[2] by calling it the constellation of
Agni, for verily does he burn the houses[3]
4 Prajāpati discharged Agni in Rohiṇī,[4] him the gods
placed under Rohiṇī, therefore did they rise to all prosperity,[5]
that is why she is called Rohiṇī[6] He alone thrives[7] who places
Agni under Rohiṇī, he rises to all prosperity

Here begins the Ādhāna section or the laying or placing of the sacred fire according to Vedic injunction In this anuvaka or subsection the time for placing the sacred fire is discussed For explanation of the terms used in the above translation see the Glossarial Index

1 The time indicated according to the constellation (used in the locative) with which the moon is in conjunction at the moment Thus *Kṛttikāsu* indicates that period during which the moon is in conjunction with the constellation Kṛttikā

* i e most prominent the first

2 *apacdyanti* this is a peculiar form, having two opposite senses to fear, respect, honour or not to render due respect = *vandanti* (Say & Bhas ) na *pujayanti* (Bhas )

3 i e , the *Agni* kindled under Kṛttika has the quality of burning or destroying the house of the yāja mana.

4 This word is accented on the first syllable in RV *Róhini* but every where in TS and TBr the accent is on the final syllable Having shown one period *Kṛttikāsu* with its fault, another period is shown for the laying down of the sacred fire

5 *rohān* = *kāman* (Say & Bhas ) or = *uc chrayān* (Bhās )

6 This is a peculiar mode of expression in the Brahmaṇa *Id Rohiṇyai rohiṇītvam*, rendered here and elsewhere as above or with the past

5 Truly the gods, being prosperous, desired to kindle Agní [2]; their Agní had not been kindled; then from them their desirable wealth passed away; they placed (Agní) under the two Púnarvasū[1]; then their desirable wealth returned to them. He who being prosperous first should become poorer, should place Agni under the two Punarvasū; then only does the desirable wealth come back to him (and) he becomes prosperous[2].

6 Whosoever should desire, "May the progeny be disposed to give me gifts," should place Agní under the two Pū́rva Phalgunī [3][3]; the Pū́rva Phalgunī are indeed the constellation of Aryamán. Him they call Aryamán who gives; to him the progeny desires to give.

7 Whosoever should desire, "Let me be prosperous," should place Agni in the two Úttara Phálgunī (constellations); the Úttara Phálgunī are indeed the constellation of Bhága; he alone becomes prosperous[4].

8 There were Ásuras by name Kālakañjá [4]. Desirous of the heavenly world they built a Fire Altar. Each Ásura placed a brick (on the Fire Altar). So Índra saying, "(I am) a brāhmaṇá[5], this is mine called Citrá", placed a brick. They ascended the heavenly world. So Índra pulled off the brick (*Citrá*); they fell down. Those who fell down became spiders (*ū́rṇāvábhayah*)[6]. Two (Ásuras) ascended [5]; they became

tense "was called", depending upon the following sentence.

7 *rdhnóty eva;* the root √*ṛdh*—is semantically connected with the root √*ruh*—and so ultimately with *Rohiṇī*.

1 The word *Púnarvasu* means "restoring goods or wealth". The dual stands for the fifth and seventh lunar mansions, see Index. This is an alternative period recommended for Ādhāna.

2 *bhadrāḥ*=*pūjyaḥ* (Sāy.); but *bhadrā́ḥ* as applied to *devā́ḥ*=*dhanasampannāḥ* (Sāy.) and=*samṛddhāḥ* (Bhās.).

3 Another period suggested, with special fruit attached.

4 *bhagī*, possessed of the six great qualities, *ais'varya*, *vīrya*, *yas'as*, *s'rī*, *jñāna* and *vairāgya* (Sāy. and Bhās.).

5 or "Índra calling himself a brahmaṇá (and saying) "This mine called Citrá".

6 *ū́rṇāvā́bhayah iti padadvayam militvaikam nāmadheyam* (Sāy.), *asamastameva padadvayam kīṭavis'eṣasya* (Bhās.); both Sāy. & Bhās. take this as two independent words=*ū́rṇavā́*

